# पाठ ७

## सप्तम गणाचे धातु.

सातव्या गणाचें चिन्ह " न " हें आहे, हें चिन्ह धातूच्या अंतिम स्वराच्या पुढें व अंतिम व्यंजनाच्या पूर्वी धातूच्या मध्येंच लागत असतें. जसें–

हिंस् ( हिंसा करणें ) हिंस्+न = हिं ( न ) स = हिनस्+ति= हिनस्ति ।

कृत् = ( कापणें ) कृत् + न = कृ ( न ) त् = कृणत् + ति = कृणत्ति ।

पिष् = ( चूर्ण करणें )

लट् = १ पिनष्टि, पिंष्टः, पिंषन्ति । २ पिनक्षि, पिंष्ठः, पिंष्ठ । ३ पिनष्मि, पिंष्वः पिंष्मः ।

लोट् = १ पिनष्टु, पिंष्टाम्, पिंषन्तु । २ पिंड्ढि, पिंष्टम्, पिंष्ट । ३ पिनषाणि, पिनषाव, पिनषाम ।

लङ् = १ अपिनट् अपिंष्टाम्, अपिंषन् । २ अपिनट्, अपिंष्टम्, अपिंष्ट । ३ अपिनषम्, अपिंष्व, अपिंष्म ।

विधिलिङ् = १ पिंष्यात्, पिंष्याताम्, पिंष्युः । २ पिंष्याः, पिंष्यातम्, पिंष्यात । ३ पिंष्याम्, पिंष्याव, पिंष्याम ।

हिंस् = ( ठार मारणें )

लट् = १ हिनस्ति, हिंस्तः, हिंसन्ति । २ हिनस्सि, हिंस्थः, हिंस्थ । ३ हिनस्मि, हिंस्वः, हिंस्मः ।

लोट् = १ हिनस्तु, हिंस्ताम्, हिंसन्तु । २ हिन्धि, हिंस्तं, हिंस्त । ३ हिनसानि, हिनसाव, हिनसाम ।

लङ् = १ अहिनत्, अहिंस्ताम्, अहिंसन् । २ अहिनः, अहिंस्तम्, अहिंस्त । ३ अहिनसम्, अहिंस्व, अहिंस्म ।

विधिलिङ् = १ हिंस्यात्, हिंस्याताम्, हिंस्युः । २ हिंस्याः, हिंस्यातम्, हिंस्यात । ३ हिंस्याम्, हिंस्याव, हिंस्याम ।

अञ्ज् = ( अंजन करणें, तेल लावणें )

लट् = १ अनक्ति, अङ्क्तः, अञ्जन्ति । २ अनक्षि, अङ्क्थः, अङ्क्थ । ३ अनज्मि, अञ्ज्वः, अञ्ज्मः ।

लोट् = १ अनक्तु, अङ्क्ताम्, अञ्जन्तु । २ अङ्ग्धि अङ्क्तम्, अङ्क्त । ३ अनजानि, अनजाव, अनजाम ।

लङ् = १ आनक्, आङ्क्ताम्, आञ्जन् । आनक्, आङ्क्तम्, आङ्क्त । ३ आनजम्, आञ्ज्व, आञ्ज्म ।

विधिलिङ् = १ अञ्ज्यात्, अञ्ज्याताम्, अञ्ज्युः । २ अञ्ज्याः, अञ्ज्यातम् अञ्ज्यात । ३ अञ्ज्याम्, अञ्ज्याव, अञ्ज्याम ।

## सप्तम गणाचे धातु.

### परस्मैपदी

अञ्ज् = ( अंजन करणें, तेल लावणें । ) अनक्ति । आनञ्ज । अङ्क्ता, अञ्जिता । अनक्तु ।

उन्द् = ( भिजणें ) उनत्ति । उन्दांचकार । उंदिता । उंदिष्यति ।

छृद् = ( चमकणें ) छृणत्ति । चछर्द । छर्दिता । छर्दिष्यति ।

पृच् = ( स्पर्श करणें ) पृणक्ति । पपर्च । पर्चिता । पर्चिष्यति ।

भञ्ज = ( तोडणें ) भनक्ति । बभञ्ज । भङ्क्ता । भङ्क्ष्यति ।

वृज् = ( टाकणें ) वृणक्ति । ववर्ज । वर्जिता । वर्जिष्यति ।

शिष् = ( विशेष होणें ) शिनष्टि । शिशेष । शेष्टा । शेक्ष्यति ।

हिंस् = ( हिंसा करणें ) हिनस्ति । जिहिंस । हिंसिता । हिंसिष्यति ।

# पाठ ८

## संस्कृत-वाक्यानि ।

१ व्याध अरण्ये आरण्यान् पशून् हिनस्ति । त्व तत्र किं हिनस्सि ? क्षत्रिय प्रजा मा हिनस्तु । अहं कदापि न हिनस्मि ।

२ भृत्य धान्य पिनष्टि । यथा स यन्त्रेण पिनष्टि, तथा क हस्तेन पिंष्यात् ?

३ क काष्ठ कृणत्ति ? त्वष्टा तत्र किं कृणत्ति ? यदा स तत्र कृणत्ति, तदा त्व किं न कृणत्सि ?

४ वायु वृक्षान्भनक्ति । वायु सर्वान् वृक्षान् बभञ्ज । त्व किमर्थं तद् भङ्क्ष्यसि ?

यासप्रमाणें वाक्यामध्ये या धातूंचा उपयोग करा

१ सप्तम गणाचे धातु.

आत्मनपदी

इन्ध् = ( प्रकाशणें ) इन्द्धे । इधांचक्रे । इन्धिता । इन्धिष्यते ।

विद् = ( विचार करणें ) विन्ते । विविदे । वेत्ता । वेत्स्यते ।

या धातूंची रुप पुढीलप्रमाणें होतात—

इन्ध् = ( प्रकाशणें )

लट = १ इन्द्धे, इन्धाते, इन्धते । २ इन्त्से, इन्धाते इन्द्ध्वे । ३ इन्धे, इन्ध्वहे इन्ध्महे ।

लोट् = १ इन्धाम्, इन्धाताम्, इन्धताम् । इन्त्स्व, इन्धाथाम्, इन्द्ध्वम् । ३ इनधै, इनधावहै, इनधामहै ।

लङ् = १ ऐन्द्ध, ऐन्धाताम्, ऐन्धत । २ ऐन्द्धा ऐन्धाथाम्, । ऐन्ध्वम् ३ ऐन्धि, ऐन्ध्वहि, ऐन्ध्महि ।

विधिलिङ = इन्धीत, इन्धीयाताम् इन्धीरन् । २ इन्धीथा , इन्धीयाथाम्, इन्धीध्वम् । ३ इन्धीय, इन्धीवहि, इन्धीमहि ।

## संस्कृत-वाक्यानि ।

१ ऋत्विजः अग्निं इन्धते । ते पुरुषाः अग्निं ऐन्धत । अहं इन्धे, त्वं इन्त्से, स इन्धे ।

२ स खिन्ते । राजा विविदे । बालकः वेत्स्यते ।

सातव्या गणाचे केवळ आत्मनेपदी धातु फारच थोडे आहेत म्हणून आता यांचे उभयपदी धातु देत आहे, ते पहा—

## सप्तम गणाचे धातु.

### उभयपदी

क्षुद् = ( चूर्ण करणें ) क्षुणत्ति, क्षुन्ते । चुक्षोद, चुक्षुदे । क्षोत्स्यति-ते ।

छिद् = ( छेदणें ) छिनत्ति, छिन्ते । चिच्छेद, चिच्छिदे । छेत्ता ।
छेत्स्यति-ते ।

तृद् = ( हिंसा करणें, अनादर करणें ) तृणत्ति, तृन्ते । ततर्द, ततृदे ।
तर्दिता । तर्दिष्यति-ते ।

भिद् = ( भेद करणें ) भिनत्ति, भिन्ते । बिभेद, बिभिदे । भेत्ता ।
भेत्स्यति-ते ।

भुज = ( खाणें, भोगणें ) भुनक्ति, भुङ्क्ते । बुभोज, बुभुजे । भोक्ता ।
भोक्ष्यति-ते ।

युज् = ( जोडणें ) युनक्ति, युङ्क्ते । युयोज, युयुजे । योक्ता । योक्ष्यति-ते ।

रिच् = ( रिकामें करणें ) रिणक्ति, रिङ्क्ते । रिरेच, रिरिचे । रेक्ता ।
रेक्ष्यति ते ।

रुध् = ( प्रतिबंध करणें ) रुणद्धि, रुन्धे । रुरोध, रुरुधे । रोद्धा ।
रोत्स्यति ते ।

विच् = ( भिन्न होणें ) विनक्ति, विङ्क्ते । विवेच, विविचे । वेक्ता ।
वेक्ष्यति-ते ।

# पाठ ९

## धातूंचीं रूपें.

लट् । युज् = ( जोडणें )

( परस्मै० ) १ युनक्ति युङ्क्तः, युञ्जन्ति । २ युनक्षि, युङ्क्थः, युङ्क्थ । ३ युनज्मि, युंज्वः, युंज्मः ।

( आत्मने० ) = १ युङ्क्ते, युंजाते, युञ्जते । २ युङ्क्षे, युञ्जाथे, युङ्ग्ध्वे । ३ युञ्जे, युञ्ज्वहे, युञ्ज्महे ।

लोट् ।

( परस्मै० ) = १ युनक्तु, युङ्क्ताम्, युञ्जन्तु । २ युङ्ग्धि, युङ्क्तम्, युङ्क्त । ३ युनजानि, युनजाव, युनजाम ।

( आत्मने० ) = १ युङ्क्ताम्, युञ्जाताम्, युञ्जताम् । २ युङ्क्ष्व, युञ्जाथाम्, युङ्ग्ध्वम् । ३ युनजै, युनजावहै, युनजामहै ।

लङ् ।

( परस्मै० ) = १ अयुनक्, अयुङ्क्ताम्, अयुञ्जन् । २ अयुनक्, अयुङ्क्तम्, अयुङ्क्त । ३ अयुनजम्, अयुंज्व, अयुञ्ज्म ।

आत्मने० ) = १ अयुङ्क्त, अयुञ्जाताम्, अयुञ्जत । २ अयुंक्थाः, अयुञ्जाथाम्, अयुङ्ग्ध्वम् । ३ अयुञ्जि, अयुञ्ज्वहि, अयुञ्ज्महि ।

विधिलिङ् ।

( परस्मै० ) = १ युञ्ज्यातम्, युञ्ज्याताम्, युञ्ज्युः । २ युञ्ज्याः, युञ्ज्यातम्, युञ्ज्यात । ३ युञ्ज्याम्, युञ्ज्याव, युञ्ज्याम ।

( आत्मने० ) = १ युञ्जीत, युञ्जीयाताम्, युञ्जीरन् । २ युञ्जीथाः, युञ्जीयाथाम्, युञ्जीध्वम् । ३ युञ्जीय, युञ्जीवहि, युञ्जीमहि ।

## संस्कृत—वाक्यानि ।

१ त्वं शुण्ठीं क्षुणत्सि किम्? अहं शुण्ठीं न क्षुणद्मि, परन्तु धान्यं क्षुणद्मि ।

२ कः वृक्षस्य शाखां छिनत्ति? किमर्थं स एवं वृक्षान् छिनत्ति? कः श्वः छेत्स्यते?

३ सर्वे पुरुषाः तत्र अन्नं भुञ्जन्ति, स्त्रियः कुत्र अन्नं भुञ्जते? बालकैः कदा अन्नं खादितम्?

४ स तत्र जलं रुणद्धि । गोपाः सर्वानपि पशून् रुन्धन्ति । मार्गे सैनिकान् कः रोत्स्यति?

५ योगी स्वीयं मनः परमात्मनि युनक्ति । सः मनः विपक्षया युङ्क्ते ।

( म० भा० उद्योगपर्व अ० ३८ )

अमोघक्रोधहर्षस्य स्वयं कृत्वाऽन्ववेक्षिणः ।
आत्मप्रत्ययकोशस्य वसुदैव वसुंधरा ॥ २६ ॥
नाममात्रेण तुष्येत छत्रेण च महीपतिः ।
भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् ॥ २७ ॥
ब्राह्मणं ब्राह्मणो वेद भर्ता वेद स्त्रियं तथा ।
अमात्यं नृपतिर्वेद राजा राजानमेव च ॥ २८ ॥

अमोघक्रोधहर्षस्य, अव्यर्थक्रोधहर्षस्य यस्य क्रोधः हर्षश्च न व्यर्थः तस्य स्वयं कर्म कृत्वा अन्ववेक्षिणः अन्वीक्षणं कुर्वतः निरीक्षणं कुर्वतः आत्मप्रत्ययकोशस्य स्वकीयकोशस्य प्रत्यक्षं कुर्वतः वसुंधरा वसुदा, धनदा नित्यं भवति ॥ २६ ॥ नाममात्रेण छत्रेण च महीपतिः तुष्येत । भृत्येभ्यः अर्थान् धनानि विसृजेत् दद्यात् । एक एव सर्वहरः सर्वधनहारकः न भवेत् ॥ २७ ॥ ब्राह्मणः ब्राह्मणं वेद जानाति, तथा भर्ता पतिः स्त्रियं धर्मपत्नीं वेद, नृपतिः राजा अमात्यं मंत्रिणं वेद, तथा च राजा अन्यं राजानं वेद ॥ २८ ॥

— + —

# पाठ १०

( महाभारत उद्योगपर्व अ० ३८ )

न शत्रुर्वशमापन्नो मोक्तव्यो वध्यतां गतः।
न्यग्भूत्वा पर्युपासीत वध्यं हन्याद्बले सति।
अहताद्धि भयं तस्माज्जायते न चिरादिव ॥ २९ ॥
दैवतेषु प्रयत्नेन राजसु ब्राह्मणेषु च।
नियन्तव्यः सदा क्रोधो वृद्धबालातुरेषु च ॥ ३० ॥
निरर्थं कलहं प्राज्ञो वर्जयेन्मूढसेवितम्।
कीर्तिं च लभते लोके न चानर्थेन युज्यते ॥ ३१ ॥
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥ ३२ ॥
न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ३३ ॥

---

शत्रुः यदि वशं आपन्नः प्राप्तः वध्यतां च गतः स कदापि न मोक्तव्यः। तं वध्यं शत्रुं बले सति स्वकीये बले सति हन्यात् एव अन्यथा न्यक् भूत्वा पुनः अभिमुखो भूत्वा पर्युपासीत आक्रमणं करिष्यति अतः अवश्यमेव वशगतः शत्रुः हन्तव्यः। हि अहतात् तस्मात् शत्रोः न चिरात् शीघ्रमेव भयं जायते ॥ २९ ॥ प्रयत्नेन दैवतेषु राजसु ब्राह्मणेषु च वृद्धबालातुरेषु स्थविरबालकरोगिषु च क्रोधः सदा नियन्तव्यः न कर्तव्यः ॥ ३० ॥ मूढसेवित मूर्खप्रयुक्तं निरर्थं अर्थहीनं कलहं प्राज्ञः ज्ञानी वर्जयेत्। तेन लोके कीर्तिं लभते, अनर्थेन च न युज्यते, अर्थेन लाभेन च युक्तो भवति ॥ ३१ ॥ यस्य प्रसादः संतोषः निष्फलः फलरहितः, क्रोधः च अपि निरर्थकः, तं भर्तारं राजानं प्रजाः न इच्छन्ति यथा स्त्रियः षण्ढं पतिं न इच्छन्ति ॥ ३२ ॥ केवलं बुद्धिः ज्ञानं धनलाभाय एव सदा न भवति, तथा जाड्यं जडता बुद्धिहीनत्वं असमृद्धये धननाशाय एव सदा न भवति। लोकपर्यायवृत्तान्तं लोकपरलोकव्यवस्थां प्राज्ञः ज्ञानी एव जानाति न इतरः अज्ञः ॥ ३३ ॥

विद्याशीलवयोवृद्धान् बुद्धिवृद्धांश्च भारत।
धनाभिजातवृद्धांश्च नित्यं मूढोऽवमन्यते ॥ ३४ ॥
अनार्यवृत्तमप्राज्ञमसूयकमधार्मिकम्।
अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ॥ ३५ ॥
अविसंवादनं दानं समयस्याऽव्यतिक्रमः।
आवर्तयन्ति भूतानि सम्यक्प्रणिहिता च वाक् ॥ ३६ ॥
अविसंवादको दक्षः कृतज्ञो मतिमानृजुः।
अपि संक्षीणकोशोऽपि लभते परिवारणम् ॥ ३७ ॥
धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा।
मित्राणां चाऽनभिद्रोहः सप्तैताः समिधः श्रियः ॥ ३८ ॥
असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः।
तादृङ् नराधिपो लोके वर्जनीयो नराधिप ॥ ३९ ॥

---

विद्याशीलवयोवृद्धान्, विद्यावृद्धान्, शीलवृद्धान्, वयोवृद्धान् बुद्धिवृद्धान्, च धनाभिजातवृद्धान्, धनवृद्धान्, अभिजातवृद्धान्, कुलवृद्धान् च, हे भारत! मूढः एव नित्यं अवमन्यते, न प्राज्ञः कदापि एतान् अवमन्यते ॥ ३४ ॥ अनार्यवृत्तं अनार्यवत् दुष्टकर्मकर्तारम् अप्राज्ञं प्रज्ञाहीनं, असूयकं, निन्दकं, अधार्मिकं, वाग्दुष्टं दुर्भाषणकर्तारं, तथा क्रोधनं अनर्थाः क्षिप्रं आयान्ति ॥ ३५ ॥ अविसंवादनं अविवादः, दानं, समयस्य कालस्य च अव्यतिक्रमः, सम्यक् प्रणिहिता प्रयुक्ता च वाक् एतानि कृत्यानि भूतानि आवर्तयन्ति समीपं कुर्वन्ति ॥ ३६ ॥ अविसंवादकः विवादस्य अकर्ता, दक्ष, कृतज्ञः, मतिमान्, ऋजुः सरलः, एवं विधः राजा यदि अपि संक्षीणकोशो धनहीनः भवति तथापि, परिवारणं भृत्यादिपरिवारं लभते प्राप्नोति ॥ ३७ ॥ धृतिः धैर्यं, शमः, दमः, शौचं, कारुण्यं करुणा दया, अनिष्ठुरा मधुरा वाक्, मित्राणां च अनभिद्रोहः अद्रोहः, एताः सप्त श्रियः ऐश्वर्यस्य समिधः सन्ति ॥ ३८ ॥ हे नराधिप! असंविभागी धनस्य अदाता, दुष्टात्मा, कृतघ्नः, निरपत्रपः निर्लज्जः, तादृक् एवं विधः नराधिपः लोके वर्जनीयः ॥ ३९ ॥

न च रात्रौ सुखं शेते ससर्पे इव वेश्मनि ।
यः कोपयति निर्दोषं स दोषोऽभ्यन्तरं जनम् ॥ ४० ॥
येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत ।
सदा प्रसादनं तेषां देवतानामिवाऽऽचरेत् ॥ ४१ ॥
येऽर्थाः स्त्रीषु समायुक्ताः प्रमत्तपतितेषु च ।
ये चाऽनार्ये समासक्ताः सर्वे ते संशयं गताः ॥ ४२ ॥

---

स रात्रौ सुखं न शेते ससर्पे सर्पयुक्ते वेश्मनि गृहे इव । यः निर्दोषं कोपयति स दोषो अभ्यन्तरं जनं अपि नाशयति ॥ ४० ॥ हे भारत ! येषु दुष्टेषु दोषयुक्तेषु योगक्षेमस्य योगक्षेमसंबन्धी दोषः स्यात् देवतानां इव तेषां सदा प्रसादनं प्रसन्नत्वं आचरेत् ॥ ४१ ॥ ये अर्थाः स्त्रीषु समायुक्ताः ये प्रमत्त पतितेषु च समासक्ताः , ये च अनार्ये अनार्येण सह समासक्ताः , ते सर्वे अर्थाः संशयं गताः तेषां सिद्धिर्नैव भविष्यति ॥ ४२ ॥

## समासाः ।

१ अविसंवादक = विशेषेण संवादकः विसंवादकः । न विसंवादकः अविसंवादकः ।

२ कृतज्ञ = कृतं जानाति इति कृतज्ञः ।

३ संक्षीणकोश = सम्यक् क्षीणः संक्षीणः । संक्षीणः कोशः यस्य सः संक्षीणकोशः ।

४ अनिष्ठुरा = न निष्ठुरा ।

५ नराधिप = नराणां अधिपः ।

६ दुष्टात्मा = दुष्टः आत्मा यस्य ।

७ कृतघ्नः = कृतं हन्ति इति कृतघ्नः ।

८ निरपत्रप = निर्गता अपत्रपा लज्जा यस्मात् ।

# पाठ ११

## अष्टम गणाचे धातु.

आठव्या गणाच्या धातूचें चिन्ह " उ ", हें आहे व हें चिन्ह धातु व प्रत्यय यांच्यामध्यें लागत असतें जसें—

क्षिण् + उ + ति = क्षिणोति ( परस्मै० )

क्षिण् + उ + ति = क्षिणुते ( आत्मने० )

आठव्या गणात केवळ परस्मैपदी धातु नाहींत व आत्मनेपदी धातु जे आहेत, ते फारच थोडे आहेत. उभयपदी धातूही काहीं फारसे नाहींत. म्हणून उभयपदी धातूंचींच रूपें बनविण्याची रीत पुढें दिली आहे—

तन् = ( विस्तार करणें ) उभयपदी धातु.

लट् ।

( परस्मै० ) = १ तनोति, तनुत, तन्वन्ति । २ तनोषि, तनुथः, तनुथ । ३ तनोमि, तनुव ( तन्व. ), तनुमः ( तन्म )।

( आत्मने० ) = १ तनुते, तन्वाते, तन्वते । २ तनुषे, तन्वाथे, तनुध्वे । ३ तन्वे, तनुवहे ( तन्वहे ), तनुमहे ( तन्महे ) ।

लोट् ।

( परस्मै० ) = १ तनोतु, तनुताम्, तन्वन्तु । २ तनु, तनुतम्, तनुत । ३ तनवानि, तनवाव, तनवाम् ॥

( आत्मने० ) = १ तनुताम्, तन्वाताम्, तन्वताम् । २ तनुष्व, तन्वाथाम्, तनुध्वम् । ३ तनवै, तनवावहै, तनवामहै ।

लङ् ।

( परस्मै० ) = १ अतनोत्, अतनुताम्, अतन्वन् । २ अतनोः, अतनुतम्, अतनुत । ३ अतनवम्, अतनुव ( अतन्व ), अतनुम ( अतन्म ) ।

( आत्मने० ) = १ अतनुत, अतन्वाताम्, अतन्वत। अतनुथाः, अतन्वाथाम्, अतनुध्वम्। ३ अतन्वि, अतनुवहि ( अतन्वहि ), अतनुमहि ( अतन्महि )।

विधिलिङ्।

( परस्मै० ) = १ तनुयात्, तनुयाताम्, तनुयुः। २ तनुयाः, तनुयातम्, तनुयात। ३ तनुयाम्, तनुयाव, तनुयाम।

( आत्मने० ) = १ तन्वीत, तन्वीयाताम्, तन्वीरन्। २ तन्वीथाः, तन्वीयाथाम्, तन्वीध्वम्। ३ तन्वीय, तन्वीवहि तन्वीमहि।

याप्रमाणें निरनिराळ्या धातूंचीं रूपें बनविता येतात.

कांहीं वचनांचीं वर दोन दोन रूपें बनवून दाखविलीं आहेत, ही गोष्ट वाचकाच्या ध्यानीं आलीच असेल. आतां अष्टम गणाचे उभयपदी धातु पुढें देत आहें, ते पहा—

## अष्टम गणाचे धातु.

### उभयपदी.

ऋण् = ( जाणें ) ऋणोति, ऋणुते। आनर्ण, आनृणे। अर्णिता। अर्णिष्यति-ते।

कृ = ( करणें ) करोति, कुरुते। चकार, चक्रे। कर्ता। करिष्यति।

क्षिण् = ( हिंसा करणें ) क्षिणोति, क्षिणुते। चिक्षेण, चिक्षिणे। क्षेणिता। क्षेणिष्यति-ते।

तन् = ( विस्तारणें ) तनोति, तनुते। ततान, तेने। तनिता। तनिष्यति ते।

तृण् = ( खाणें ) तृणोति, तृणुते। ततर्ण। तर्णिता। तर्णिष्यति-ते।

सन् = ( देणें ) सनोति, सनुते। ससान, सेने। सनिता। सनिष्यति-ते।

## संस्कृत-वाक्यानि ।

१ स धनं तनुते । धर्माध्यक्षौ धर्मं तन्वाते । बालकाः उपवनक्रीडां तन्वन्ति ।

२ अहं पठनं करोमि । त्वं किं करोषि ? सः करोतु । त्वं कुरु । सः मा करोतु ।

३ सिंहः वने हस्तिनः क्षिणोति । त्वं किमर्थं क्षिणोषि ? बालः क्षिणोतु, परंतु प्राज्ञः मा क्षिणोतु ।

याप्रमाणें वाक्यें बनवितां येतात. आतां आत्मनेपदाचे धातु पहा—

## अष्टम गणाचे धातु, आत्मनेपदी.

मन् = ( विचार करणें, जाणणें ) मनुते । मेने । मनिता । मनिष्यते ।

वन् = ( याचना करणें ) वनुते । ववने । वनिता । वनिष्यते ।

लिट् = १ मनुते, मन्वाते, मन्वते । २ मनुषे, मन्वाथे, मनुध्वे । ३ मन्वे, मनुवहे, मनुमहे ।

लोट् = १ मनुताम्, मन्वाताम्, मन्वताम् । २ मनुष्व, मन्वाथाम्, मनुध्वम् । ३ मनवै, मनवावहै, मनवामहै ।

लङ् = १ अमनुत, अमन्वाताम्, अमन्वत । २ अमनुथाः, अमन्वाथाम्, अमनुध्वम् । ३ अमन्वि, अमनुवहि, अमनुमहि ।

विधिलिङ् = १ मन्वीत, मन्वीयाताम्, मन्वीरन् । २ मन्वीथाः, मन्वीयाथाम्, मन्वीध्वम् । ३ मन्वीय, मन्वीवहि, मन्वीमहि ।

अशाच तऱ्हेने " मन् " धातूची रूपेंहि बनवावयाची असतात. या धातूचा पुढील वाक्यांमध्यें उपयोग करून दाखविला आहे, तो पहा—

## संस्कृत-वाक्यानि ।

१ वयं सर्वेऽपि मानवाः मनुमहे । मूढः मनुष्यः अपि मनुते । प्राज्ञस्तु मनुते एव ।

२ याचकः भक्ष्यं वनुते । कः एव अवनुत ? स भिक्षुः वनुताम् परन्तु त्वं मा वनुष्व ।

# पाठ १२

## नवम गणाचे धातु.

### नवम गणाचें विकरण.

' ना ' हें नवम गणाचें चिन्ह आहे व तें आठव्या गणाप्रमाणेंच धातूला प्रत्ययाच्या पूर्वी लागत असतें. उदाहरणार्थ पहा—

अश्+ना+ति = अश्नाति ।
पुष्+ना+ति = पुष्णाति ।
स्तम्भ्+ना+ति = स्तभ्नाति ।

याप्रमाणें या धातूंचीं रूपें होतात. या गणाच्या धातूंचीं रूपें बनविण्याची रीत पुष्कळच सोपी आहे.

बंध् = ( बांधणें )

लट् = १ बध्नाति, बध्नीतः, बध्नन्ति । २ बध्नासि, बध्नीथः, बध्नीथ ।
३ बध्नामि, बध्नीवः, बध्नीमः ।

लोट् = १ बध्नातु, बध्नीताम्, बध्नन्तु । २ बधान, बध्नीतम्, बध्नीत ।
३ बध्नानि, बध्नाव, बध्नाम ।

लङ् = १ अबध्नात्, अबध्नीताम्, अबध्नन् । २ अबध्नाः, अबध्नीतम्, अबध्नीत । ३ अबध्नाम्, अबध्नीव, अबध्नीम ।

विधिलिङ् = १ बध्नीयात्, बध्नीयाताम्, बध्नीयुः । २ बध्नीयाः, बध्नीयातम्, बध्नीयात । ३ बध्नीयाम्, बध्नीयाव, बध्नीयाम ।

या गणाचे कांहीं परस्मैपदी धातु पुढें दिले आहेत. त्यांचीं रूपेंही याच पद्धतीनें बनवावींत.

## नवम गणाचे धातु.

### परस्मैपदी.

अश् = ( भोजन करणें ) अश्नाति । आश । अशिता । अशिष्यति ।
ऋ = ( जाणें ) ऋणाति । अरांचकार । अरिता । अरिष्यति ।

कुंथ् = ( दुःखी होणें ) कुथ्नाति । चुकुन्थ । कुंथिता । कुंथिष्यति ।

क्लिश् = ( दुःख भोगणें ) क्लिश्नाति । चिक्लेश । क्लेशिता, क्लेष्टा ।
क्लेशिष्यति ।

क्षुभ् = ( क्षुब्ध होणें ) क्षुभ्नाति । चुक्षोभ । क्षोभिता । क्षोभिष्यति ।

गृ = ( शब्द करणें ) गृणाति । जगार । गरिता । गरिष्यति ।

ग्रथ् = ( जोडणें ) ग्रथ्नाति । जग्रन्थ । ग्रंथिता । ग्रंथिष्यति ।

जॄ = ( म्हातारा होणें ) जृणाति । जजार । जरिता, जरीता । जरिष्यति,
जरीष्यति ।

दृ = ( फाडणें ) दृणाति । ददार । दरिता । दरिष्यति ।

नभ् = ( हिंसा करणें ) नभ्नाति । ननाभ । नभिता । नभिष्यति ।

नॄ = ( घेऊन जाणें ) नृणाति । ननार । नरिता । नरिष्यति ।

पुष् = ( पुष्ट होणें ) पुष्णाति । पुपोष । पोष्टा । पोक्ष्यति ।

पॄ = ( पालनपोषण करणें ) पृणाति । पपार । परिता । परिष्यति ।

बंध् = ( बांधणें ) बध्नाति । बबंध । बन्द्धा । भन्त्स्यति ।

भॄ = ( निंदा करणें, पोषण करणें ) भृणाति । बभार । भरिता ।
भरिष्यति ।

मन्थ् = ( घुसळणें ) मथ्नाति । ममन्थ । मन्थिता । मन्थिष्यति ।

मुष् = ( चोरी करणें ) मुष्णाति । मुमोष । मोषिता । मोषिष्यति ।

मृद् = ( दाबणें ) मृद्नाति । ममर्द । मर्दिता । मर्दिष्यति ।

मॄ = ( हिंसा करणें ) मृणाति । ममार । मरिता । मरिष्यति ।

शॄ = ( हिंसा करणें ) शृणाति । शशार । शरिता । शरिष्यति ।

श्रन्थ् = ( ढिलें करणें, आनंदित होणें ) श्रथ्नाति । शश्रन्थ । श्रंथिता ।
श्रंथिष्यति ।

स्तम्भ् = ( धारण करणें ) स्तभ्नाति । तस्तम्भ । स्तम्भिता ।
स्तम्भिष्यति ।

## संस्कृत–वाक्यानि ।

१ जनाः मधुरं अन्नं अश्नन्ति । सर्वे प्राणिनः अन्नं अश्नुवन्तु । बालकाः प्रथमं अश्नुवन्तु ।

२ भृत्यः तत्र किमर्थं क्लिश्नाति ? शिष्यः मा क्लिश्नातु । स्त्रियः न क्लिश्नातु ।

३ मालाकारः पुष्पाणां मालाः ग्रथ्नाति । त्वं किं ग्रथ्नासि ? यदा स ग्रथ्नाति, तदा त्वमपि ग्रथान ।

४ दुग्धेन बालः पुष्णाति । त्वं केन अन्नेन पुष्णासि ? सर्वे मनुष्याः पुष्णन्तु ।

५ चौरा गृहं भित्वा धनं मुष्णन्ति । कः अपि मनुष्यः कदापि कस्यापि धनं मा मुष्णातु ।

६ वायुः मेघे उदकं स्तभ्नाति । हिमकालः तडागे उदकं स्तभ्नाति । त्वं नदीजलं स्तभान ।

## संधि केलेलीं वाक्यें.

( १ ) जना मधुरमन्नमश्नन्ति । सर्वे प्राणिनोऽन्नमश्नुवन्तु । बालकाः प्रथममश्नुवन्तु । ( २ ) भृत्यस्तत्र किमर्थं क्लिश्नाति ? शिष्यो मा क्लिश्नातु । स्त्रियो न क्लिश्नीयुः । ( ३ ) मालाकारः पुष्पाणां माला ग्रथ्नाति । ( ४ ) बालो दुग्धेन पुष्णाति । त्वं केनान्नेन पुष्णासि ? ( ५ ) कोऽपि मनुष्यः कदापि कस्यापि धनं मा मुष्णातु ।

---

# पाठ १३

## नवम गणाचे धातु.

### आत्मनेपदी.

वृ = ( सेवन करणें, वरणें ) वृणीते । वव्रे । वरिता । वरिष्यति ।

### आत्मनेपदी रूपें.

लट् = १ वृणीते, वृणाते, वृणते । २ वृणीषे, वृणाथे, वृणीध्वे । ३ वृणे, वृणीवहे, वृणीमहे ।

लोट् = १ वृणीताम्, वृणाताम्, वृणताम् । २ वृणीष्व, वृणाथाम्, वृणीध्वम् । ३ वृणै, वृणावहै, वृणामहै ।

लङ् = १ अवृणीत, अवृणाताम्, अवृणत । २ अवृणीथाः, अवृणाथाम्, अवृणीध्वम् । ३ अवृणि, अवृणीवहि । अवृणीमहि ।

विधिलिङ् = १ वृणीत, वृणीयाताम्, वृणीरन् । २ वृणीथाः, वृणीयाथाम्, वृणीध्वम् । ३ वृणीय, वृणीवहि, वृणीमहि ।

### संस्कृत वाक्यानि ।

१ पुरुषः विद्यां अधीत्य ब्रह्मचर्यं समाप्य गृहस्थाश्रमाय वृणीते धर्मेण विधिना ।

२ हे शिष्य ! त्वं इदानीं विद्याव्रतस्नातकोऽसि अतः अनुरूपां स्त्रियं वृणीष्व ।

३ सर्वाः प्रजाः राज्यशासनाय सुयोग्यं राजानं वृणते ।

## नवम गणाचे धातु.

### उभयपदी.

शॄ = ( हिंसा करणें ) शृणाति, शृणीते ।

क्री = ( खरेदी करणें ) क्रीणाति, क्रीणीते । चिक्राय, चिक्रिये । क्रेता । क्रेष्यति-ते ।

ग्रह् = ( घेणें ) गृह्णाति, गृह्णीते । जग्राह, जगृहे । ग्रहीता । ग्रहीष्यति-ते ।

ज्ञा = ( जाणणें ) जानाति, जानीते । जज्ञौ, जज्ञे । ज्ञाता । ज्ञास्यति-ते ।

धू = ( कांपणें ) धूनाति, धुनीते । दुधाव, दुधुवे । धोता, धविता । धोष्यति-ते ।

पू = ( पवित्र करणें ) पुनाति, पुनीते । पुपाव, पुपुवे । पविता । पविष्यति-ते ।

प्री = ( संतुष्ट होणें ) प्रीणाति-प्रीणीते । पिप्राय, पिप्रिये । प्रेता । प्रेष्यति-ते ।

मी = ( हिंसा करणें ) मीनाति, मीनीते । ममौ, मिम्ये । माता । मास्यति-ते ।

यु = ( बंधन करणें ) युनाति, युनीते । युयाव, युयुवे । योता । योष्यति-ते ।

लू = ( कापणें ) लुनाति, लुनीते । लुलाव, लुलुवे । लविता । लविष्यति-ते ।

वृ = ( वरणें ) वृणाति, वृणीते । ववार, वव्रे । वरिता । वरिष्यति-ते ।

श्री = ( शिजवणें ) श्रीणाति, श्रीणीते । शिश्राय, शिश्रिये । श्रेता । श्रेष्यति-ते ।

सि = ( बांधणें ) सिनाति, सिनीते । सिषाय, सिष्ये । सेता । सेष्यति-ते ।

स्तृ = ( आच्छादन घालणें ) स्तृणाति, स्तृणीते । तस्तार, तस्तरे । स्तरिता । स्तरिष्यति-ते ।

# पाठ १४

## उभयपदी धातूंचीं रूपें.

### लट्

(परस्मै०) १ क्रीणाति, क्रीणीतः, क्रीणन्ति । २ क्रीणासि, क्रीणीथः, क्रीणीथ । ३ क्रीणामि, क्रीणीवः क्रीणीमः ।

(आत्मने०) १ क्रीणीते, क्रीणाते, क्रीणते । २ क्रीणीषे, क्रीणाथे, क्रीणीध्वे । ३ क्रीणे, क्रीणीवहे, क्रीणीमहे ।

### लोट्

(परस्मै०) १ क्रीणातु, क्रीणीताम्, क्रीणन्तु ।
२ क्रीणीहि, क्रीणीतम्, क्रीणीत ।
३ क्रीणानि, क्रीणाव, क्रीणाम ।

(आत्मने०) १ क्रीणीताम्, क्रीणाताम्, क्रीणताम् ।
२ क्रीणीष्व, क्रीणाथाम्, क्रीणीध्वम् ।
३ क्रीणै, क्रीणावहै, क्रीणामहै ।

### लङ्

(परस्मै०) १ अक्रीणात्, अक्रीणीताम्, अक्रीणन् ।
२ अक्रीणाः, अक्रीणीतम्, अक्रीणीत ।
३ अक्रीणाम्, अक्रीणीव, अक्रीणीम ।

(आत्मने०) १ अक्रीणीत, अक्रीणाताम्, अक्रीणत ।
२ अक्रीणीथाः, अक्रीणाथाम्, अक्रीणीध्वम् ।
३ अक्रीणि, अक्रीणीवहि, अक्रीणीमहि ।

### विधिलिङ्

(परस्मै०) १ क्रीणीयात्, क्रीणीयाताम्, क्रीणीयुः ।
२ क्रीणीयाः, क्रीणीयातम्, क्रीणीयात ।
३ क्रीणीयाम्, क्रीणीयाव, क्रीणीयाम ।

( आत्मने० ) = १ क्रीणीत, क्रीणीयाताम्, क्रीणीरन्।
२ क्रीणीथाः, क्रीणीयाथाम्, क्रीणीध्वम्।
३ क्रीणीय, क्रीणीवहि, क्रीणीमहि।

## संस्कृत--वाक्यानि।

१ अहं धान्यं क्रीणामि, त्वं किं क्रीणीषे? त्वं किं अद्य क्रेष्यसि? न अहं घृतं अक्रीणम्।

२ अहं जानामि, त्वं जानासि, स जानातु। अहं न अजानाम् यद् त्वं तत्र पुस्तकं अपठः।

३ अहं ते सौभाग्याय हस्तं गृह्णामि। ते सर्वे गृह्णन्तु। त्वं किं ग्रहिष्यसि?

४ वायुः चंपकवनानि धुनाति। त्वं वस्त्रं किं न धोष्यसि? ते सर्वे काष्ठानि धुनन्ति।

५ स तां भूमिं जलेन पुनाति। त्वं किं पुनासि? स मंत्रैः कर्णौ पुनीते। महात्मा आशीर्वादैः सर्वान् पुनातु।

अशीं वाक्यें आता वाचकाना सहज बनविता येतील.

## सूचना.

आतापर्यंत संस्कृतमधील सर्व धातूंचा विचार केला. धातूंचीं रूपें बनविण्याची अत्यंत सोपी रीत पुढील भागामध्यें दिली जाईल. ती रीत नीट पाहून वाचकांनीं आपला अभ्यास अधिक वाढवावा. याप्रमाणें अभ्यास केला असता, वाचकांची पुष्कळच प्रगति संस्कृतमध्यें होऊं शकेल

## समास.

१ चंपकवनं = चंपकानां वनम्।
२ सौभगत्वं = सौभगस्य भावः।

---

## पाठ १५

### ( महाभारत उद्योगपर्व अ० ३९ )

धृतराष्ट्र उवाच।

सर्वं त्वमायतीयुक्तं भाषसे प्राज्ञसंमतम्।
न चोत्सहे सुतं त्यक्तुं यतो धर्मस्ततो जयः ॥ ९ ॥

विदुर उवाच।

सर्वैर्गुणैः संपन्नो न जातु विनयान्वितः।
सुसूक्ष्ममपि भूतानामुपमर्दमपेक्षते ॥ १० ॥
परापवादनिरताः परदुःखोदयेषु च।
परस्परविरोधे च यतन्ते सततोत्थिताः ॥ ११ ॥
सदोषं दर्शनं येषां संवासे सुमहद्भयम्।
अर्थादाने महान्दोषः प्रदाने च महद्भयम् ॥ १२ ॥
ये वै भेदनशीलास्तु सकामा निस्त्रपाः शठाः।

---

धृतराष्ट्र उवाच— [illegible] सर्वं प्राज्ञसंमतं- सुज्ञसंमतं आयतीयुक्तं हितकरं भाषसे, तथापि सुतं पुत्रं त्यक्तुं न- उत्सहे उत्साहं न धारयामि। अतः त्वमेव पृतत्, यतः धर्मः ततो जयः ॥ ९ ॥ विदुर उवाच— यः सर्वैरेव गुणैः संपन्नः गुणैः युक्तः विनयान्वितश्च अस्ति सः भूतानां प्राणिनां सुसूक्ष्मं अत्यल्पमपि उपमर्दं नाशं न अपेक्षते न इच्छति ॥ १० ॥ परापवादनिरताः परनिंदारताः दुष्टाः सततोत्थिताः सततजागरूकाः भूत्वा परस्परविरोधे परस्पर- कलहे यतन्ते प्रयतंते तथा च परदुःखोदयेषु परदुःखकारकेषु कर्मसु च प्रयतन्ते ॥ ११ ॥ येषां दर्शनं सदोषं दोषयुक्तं, येषां संवासे च महद्भयं वर्तते येषां अर्थादाने धनग्रहणे महान् दोषः, येषां धनस्य प्रदाने च महद्भयं वर्तते ते महादुष्टाः सन्ति ॥ १२ ॥ ये वै शठाः धूर्ताः निस्त्रपा निर्लज्जाः, सकामाः कामेन सहिताः, तथा भेदनशीलाः विरोधकारकस्वभावाः, ये च

ये पापा इति विख्याताः संवासे परिगर्हिताः ॥ १३ ॥
युक्ताश्चान्यैर्महादोषैर्ये नरास्तान् विवर्जयेत् ।
निवर्तमाने सौहार्दे प्रीतिर्नीचे प्रणश्यति ॥ १४ ॥
या चैव फलनिर्वृत्तिः सौहृदे चैव यत्सुखम् ।
यतते चापवादाय यत्नमारभते क्षये ॥ १५ ॥
अल्पेऽप्यपकृते मोहान्न शांतिमधिगच्छति ।
तादृशैः संगतं नीचैर्नृशंसैरकृतात्मभिः ॥ १६ ॥
निशाम्य निपुणं बुद्ध्या विद्वान्दूराद्विवर्जयेत् ।
यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम् ॥ १७ ॥
[redacted] पुत्रपशुभिर्वृद्धिं श्रेयश्चाऽऽनन्त्यमश्नुते ।
ज्ञातयो वर्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम् ॥ १८ ॥

---

पापा इति विख्याताः ये संवासे सहवासे परिगर्हिताः निंदिताः सन्ति । तैः सह मैत्री कदापि न कर्तव्या ॥ १३ ॥ ये अन्यैः महादोषैः युक्ताः तान् नरान् सौहृदयैं विवर्जयेत् । सौहार्दे निवर्तमाने नाशमाने नीचे जने प्रीतिः प्रणश्यति ॥ १४ ॥ या च एव फलनिर्वृत्तिः सौहृदे मित्रत्वे च एव यत्सुखं वर्तते, तत्तु नीचसंगत्या नैव प्राप्नोति । यः अपवादाय निंदाकरणार्थं एव यतते यत्नवान् भवति, क्षये नाशाय एव यत्न आरभते ॥ १५ ॥ यः च अल्पे अपि अपकृते अपकारे कृते मोहात् कदापि शांतिं न अधिगच्छति प्राप्नोति, तादृशैः नीचैः नृशंसैः दुष्टैः अकृतात्मभिः हीनात्मभिः सह संगतं मित्रत्वं ॥ १६ ॥ बुद्ध्या विचारशक्त्या निपुणं निशाम्य पूर्णं विचार्य विद्वान् पुरुषः दूरात् विवर्जयेत् । तैः दुष्टैः सह मैत्री न कर्तव्या । यः दरिद्रं दीनं आतुरं रोगिणं ज्ञातिं अनुगृह्णाति ॥ १७ ॥ सः पुत्रपशुभिर्वृद्धिं श्रेयः कल्याणम् आनन्त्यं अनंतत्वं च अश्नुते प्राप्नोति । ये आत्मनः शुभं इच्छन्ति, तैः ज्ञातयः वर्धनीयाः संवर्धनीया ॥ १८ ॥ यः कुलवृद्धिं च इच्छंति, तेन अपि

कुलवृद्धिं च राजेंद्र तस्मात्साधु समाचार ।
श्रेयसा योक्ष्यते राजन् कुर्वाणो ज्ञातिसत्क्रियाम् ॥ १९ ॥
विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ ।
किं पुनर्गुणवन्तस्ते त्वत्प्रसादाभिकांक्षिणः ॥ २० ॥
प्रसादं कुरुवीराणां पांडवानां विशांपते ।
दीयताम् ग्रामकाः केचित्तेषां वृत्यर्थमीश्वर ॥२१ ॥
एवं लोके यशः प्राप्तं भविष्यति नराधिप ।
वृद्धेन हि त्वया कार्यं पुत्राणां तात शासनम् ॥ २२ ॥
मया चापि हितं वाच्यं विद्धि मां त्वाद्धितैषिणम् ।
ज्ञातिभिर्विग्रहस्तात न कर्तव्यः शुभार्थिना ।
सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ ॥ २३ ॥

---

तथैव कर्तव्यं । हे राजश्रेष्ठ ! तस्मात् साधु यथा स्यात् तथा समाचर, शोभनं आचरणं कुरु । हे राजन् ! ज्ञातिसत्क्रियां कुर्वाणः श्रेयसा योक्ष्यते कल्याणेन युक्तो भवति ॥ १९ ॥ हे भरतर्षभ भरतश्रेष्ठ ! विगुणाः गुणहीना अपि ज्ञातयः स्वजातिपुरुषाः संरक्ष्याः । किं पुनः त्वत्प्रसादाभिकांक्षिणः तव प्रसादं एव इच्छन्तः ते गुणवन्तः ज्ञातयः रक्षणीया इति वक्तव्यम् ? ॥ २० ॥ हे विशांपते ! प्रजानां पालक ! वीराणां पांडवानां उपरि प्रसादं कुरु । हे ईश्वर ! राजन् ! तेषां वृत्यर्थं केचित् ग्रामकाः ग्रामाः दीयताम् ॥ २१ ॥ हे नराधिप ! एवं लोके यशः प्राप्तं भविष्यति । हे तात ! त्वया वृद्धेन हि पुत्राणां शासनं कार्यम् ॥ २२ ॥ मया च अपि हितं वाच्यम् । मां त्वद्धितैषिणं तव हितं एव इच्छन्तं मां विद्धि जानीहि । हे तात ! शुभार्थिना शुभं इच्छता पुरुषेण ज्ञातिभिः विग्रह- कलहः न कर्तव्य । हे भरतर्षभ ! ज्ञातिभिः सह भोज्यानि सहभोजनानि सुखानि सुखकारकाणि भवन्ति ॥२३॥

# पाठ १६

## रामायणम् ।

एवं विलपन्ती सीता तदा वृक्षगतं गृध्रं ददर्श। सा सीता तदा तं गृध्रमुद्दीक्ष्य समाक्रन्दच्च महता शब्देन। "पश्य माम्, रावणस्य वशं गताऽस्मि, रक्ष मां, अनाथवत् ह्रियमाणाम्" इति।

जटायुस्तु तच्छब्दं श्रुत्वा, दृष्ट्वा च तां राक्षसेन ह्रियमाणां, व्याजहार— "राक्षसाधम ! नार्हसि निन्दितं कर्म कर्तुम् ! धीरो नैवं कर्म समाचरेत् येन तं परो विगर्हयेत्। यथाऽऽत्मनो दाराः तथा परेषामपि रक्ष्या एव। अहं तु वृद्धः। त्वं तु युवा कवची सशरश्च किंतु सीतामादाय कुशली नैव गमिष्यसि।" इति।

एवमुक्तो रावणो अमर्षणशीलः पतगेन्द्रं गृध्रं जटायुं अभिदुद्राव वातोद्धतयोर्मेघयोरिव तयोस्तत्र तुमुलः संप्रहारो बभूव जटायुस्तु तदा तुंडेन रावणस्य दश बाहूनतिक्रम्य तं अदशत्। दशग्रीवोऽपि सीतां तत्रोत्सृज्य क्रोधात् मुष्टिभ्यां चरणाभ्यां गृध्रराजमपोथयत्। खड्गेन तस्य पक्षौ पादौ चाऽच्छिनत्। ततोऽसौ जटायुः धरण्यां पपात।

रावणेन निहतं गृध्रराजं निरीक्ष्य सीता भृशं विललाप। रावणस्तु तां, क्रोशन्तीं केशेषु जग्राह। तदा सर्वं जगत् अंधेन तमसा व्याप्तम्। मत्तगज इव दशाननस्तामादाय सत्वरं प्रस्थितः। तदा तस्याः शरीरात् पुष्पमाला च्युता धरणीतले पपात। तस्याश्चरणाच्च रत्नभूषिते नूपुरे कंठाद्धारयष्टिश्च भ्रष्टम्। एवं रावणेन ह्रियमाणायां सीतायां दिवाकरः प्रभारहितो बभूव। यत्र रावण सीतां पतिव्रतां हरति तत्र धर्मो नास्ति, कुतः सत्यं, आर्जवं अपि न इति सर्वाण्यपि भूतानि पर्यदेवयन्।

---

शब्दार्थ-वृक्षगतं = वृक्षावर असलेला. समाक्रन्दत् = ओरडली. व्याजहार = बोलला. कुशली = खुशाल. अमर्षणशीलः = रागीट. अभिदुद्राव = धावला. तुंडं = चोंच. निरीक्ष्य = पाहून.

एवं विलपन्तं लक्ष्मणो राममब्रवीत्– "क एष शोकः ? संस्तंभ राम ! सर्वथा न भविष्यति रावणः पातालमपि प्रविशन्। स्थानं तावल्लभस्व पापस्य। सीता ततो हास्यति निधनं वा गमिष्यति। आर्यपुत्र ! उत्साहं धत्स्व। नास्त्युत्साहात्परमं बलम्। सोत्साहस्य हि लोकेषु न किंचिदपि दुर्लभं वर्तते।" इति।

एवं लक्ष्मणेन सम्बोधितो रामस्त्यक्त्वा शोकं धैर्यमुपागमत्। अतिक्रम्य ततः पथो ऋष्यमूकपर्वतस्य समीपं रामलक्ष्मणौ प्राप्तौ वानराणां तत्रस्थानां अधिपेन च दृष्टौ।

सुग्रीवस्तु तौ दृष्ट्वा शंकितोऽभवत्। शंकितं च तं वाक्यकोविदो हनूमानुवाच। "त्यजतामेष संभ्रम। मलयोऽयं गिरीवरः। नेह भयं वालिनः" इति। सुग्रीवस्तूवाच– "कस्य न स्याद्भयमेतौ पुरुषोत्तमौ दीर्घबाहू वीर्यवत्तरौ वीरौ दृष्ट्वा ? शंके वालिप्रहिताविवैतौ भवत। नाऽत्र विश्वासः संशयश्च। जानीहि भद्र ! एतौ शुद्धात्मानौ वा अन्यथेति।"

एवं समादिष्टो हनूमान् ऋष्यमूकादुत्प्लुत्य यत्र रामलक्ष्मणौ आस्ताम्। हनूमान् भिक्षुरूपेण तत्र गतो विनीतवदुपागम्य प्रणिपत्य च तौ वाक्यमुवाच– "राजर्षिप्रतिमौ तापसौ कथं प्राप्तौ अमुं देशम् ? सुग्रीवनामको हि वानरराजो धर्मात्मा विनिकृतो भ्रात्रा तु स्थितोऽत्र तिष्ठति। तेन महात्मनाऽहं प्रेषितो हनूमान्नाम वानरोऽस्मि। स हि युवाभ्यां सख्यमिच्छति। तस्य सुग्रीवस्य मां सचिव आनीतम्। कामग कामचारी चाऽस्मि। केवलं सुग्रीवप्रियकरणात् ऋष्यमूकपर्वतादिह प्राप्तोऽस्मि। नान्यद् किंचित् कर्तव्यमस्ति।"

# पाठ १८

## रामायणम् ।

इत्येतच्छ्रुत्वा रामो लक्ष्मणमब्रवीत्– " सचिवोऽयं वानरेन्द्रस्य, ममान्तिकमागतोऽस्ति । अनेन कृत्स्नं व्याकरणमपि पठितमिति दृश्यते । यतः व्याहरताऽनेन किंचिदपि नापशब्दितम् । " एवमुक्तो लक्ष्मणो हनूमन्तमब्रवीत्– " विदिता हि गुणाः सुग्रीवस्य, तमेव वयं मार्गावः । यत्सुग्रीववचनाद् ब्रवीषि तत्करिष्यावः । ", इति ।

तच्छ्रुत्वा हनूमानपृच्छत्– " किमर्थं रामः सानुजो घोरं वनमागतः ? " इति हनूमत्प्रश्नं श्रुत्वा लक्ष्मणेन सर्वोऽपि वृत्तांतः तस्मै निवेदितः । उवाच च – " यस्य प्रसादेन सर्वा इमाः प्रजाः प्रसादयेयुः, स एव रामः शरण्यस्य वानरेन्द्रस्य सुग्रीवस्य प्रसादमभिकांक्षते " इति । करुणमेवं ब्रुवाणं सौमित्रिं हनूमान्प्रत्युवाच । " दिष्ट्या वानरेन्द्रेणैतस्य द्रष्टव्यौ जितक्रोधौ बुद्धिमन्तौ जितेंद्रियौ धीराश्च दर्शनमागताः । सोऽपि सुग्रीवो वालिना राज्याद्विभ्रष्टः कृतवैरश्च । हृतदारश्च भ्राता वने त्यक्तो विनिकृतश्च भृशं युवयोः साहाय्यं करिष्यति इति " । हनूमांस्ततो रामलक्ष्मणौ स्वकीयं पृष्ठं आरोपयामास, ऋष्यमूकपर्वतान्मलयगिरिं गत्वा कपिराजाय सुग्रीवाय रामलक्ष्मणावागतौ इति निवेदयामास ।

सुग्रीवस्तु प्रीत्या राघवमुवाच– " एष प्रसारितो बाहुर्यदि रोचते मे सख्यम् । बध्यतां ध्रुवा मर्यादा " इति । उभौ तौ हस्तौ संपीड्य दीप्यमानमग्निं प्रदक्षिणीचक्रतुः वयस्यत्वं चोपाजग्मतुः । सुग्रीवमनसौ च कपिराघवौ तदाऽन्योन्यमभिवीक्षन्तौ तृप्तिं नाऽभिगतौ । सुग्रीवस्तदा प्रहृष्टवदनो राममुवाच– " हृद्यो हि त्वं वयस्यः । एकं नौ सुखं दुखं च । विदितो हि मे वृत्तान्तः सर्वस्त्वत्सकाशादनूमतो मंत्रिवरात् । हे राम ! अहं तव भार्यां अचिरादेवानयिष्यामि । येन दुःखाद्वियोगजान्मुक्तो भविष्यसि । अनुमानाज्जानामि च ह्रियमाणां सीता मया दृष्टेति । तथैव स्वकीयं उत्तरीयं शोभ-

ॐ

# संस्कृत--स्वयं-शिक्षक

## सप्तदशो भागः ।

## पाठ १

### वर्तमानकाल ( लट् )

आतांपर्यन्त जितका अभ्यास झाला आहे, त्याच्या योगानें दहाही गणांचीं मान, भूत व भविष्यकालांतील क्रियापदांचीं रूपें वाचकांना बनवितां येऊं लीं आहेत. तथापि तींच रूपें विशेष सोप्या रीतीनें कशीं बनवितां येतात, तें ठिकाणीं आतां सांगावयाचें आहे. धातूंचे दहा गण केले आहेत व प्रत्येक तूचीं वर्तमानकाळ ( लट् ) वगैरे दहा रूपें होत असतात. ही गोष्ट वाचकांना त आहेच. या लट् आदि दहा लकारांपैकीं ज्या लकारांना गणाचीं चिन्हें गतात, ते लकार हे आहेत—

| | |
|---|---|
| १ लट् ( वर्तमान ) | बोधति । |
| २ लोट् ( आज्ञार्थ ) | बोधतु । |
| ३ लङ् ( अनद्यतन भूतकाळ ) | अबोधत् । |
| ४ ( विधि ) लिङ् ( विध्यर्थ ) | बोधेत् । |

बाकीच्या सहा लकारांचा गणाशीं फारसा सम्बन्ध येत नाहीं. अर्थात् बहुत-लिं बाकीच्या सर्व लकारांचीं रूपें सर्वही गणांच्या धातूंचीं सारखींच होत अस-त. उदाहरणार्थ पहा—

*

५ लिट् ( अनद्यतन परोक्षभूत ) बुबोध ।
६ लुट् ( अनद्यतन भविष्य ) बोधिता ।
७ लृट् ( भविष्य काळ ) बोधिष्यति ।
८ लेट् ( वैदिक )
आशीर्लिङ् ( आशीर्वादार्थ ) बुध्यात् ।
९ लुङ् ( भूतकाळ ) अबुधत् ।
१० लृङ् ( हेतुहेतुमद्भावार्थ ) अबोधिष्यत् ।

आशीर्लिङ् याचा पूर्वी सांगितलेल्या " विधिलिङ् " शीं सम्बन्ध आहे व लेट्चीं रूपें केवळ वेदामध्येंच येत असतात म्हणून त्याची रूपें येथें बनवून दाखविलीं नाहींत वेदामध्यें त्याचीं रूपें येतात तींच वाचकांनीं पुढें पहावींत, म्हणून या 'लेट्' चीं रूपें बनविण्याची रीत येथें समजण्याची काहीं आवश्यकता नाहीं

१ लट्, २ लोट्, ३ लङ् व ४ विधिलिङ् याच चार लकाराना गणाचीं चिन्हें लागतात, व बाकीच्या सहा लकाराच्या रूपाचा गणचिन्हाशीं काहींएक सम्बन्ध नसतो, ही गोष्ट वाचकांनीं येथें विशेषत लक्ष्यात ठेवावी ही एवढी एक गोष्ट लक्ष्यात राहिल्यानें रूपें बनविण्याचा पुष्कळसा त्रास कमी होईल आता वर्तमानकाळाचे प्रत्यय पहा—

## वर्तमानकाळाचे परस्मैपदी प्रत्यय.

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| १ प्रथम पुरुष | ति | तः | अन्ति |
| २ मध्यम ,, | सि | थ | थ |
| ३ उत्तम , | आमि | आव | आम |

हे प्रत्यय सर्व गणाच्या परस्मैपदी वर्तमानकाळाच्या रूपाकरिता सारखेच आहेत उदाहरणार्थ पुढील धातूतील रूप पहा—

## पाठ २

| | | | |
|---|---|---|---|
| बुध् धातु= | बोध-ति | बोध-तः | बोधन्ति । |
| | बोध-सि | बोध-थः | बोध-थ । |
| | बोधामि | बोधावः | बोधामः । |

अशाच पद्धतीनें प्रत्येक गणाच्या धातूंना गणाचें चिन्ह लावून त्यापुढें वरील प्रत्यय लावले असता, त्या धातूचीं वर्तमानकाळाचीं रूपें बनतात, हा एवढा एक नियम लक्ष्यात ठेवला असता प्रत्येक धातूच्या वर्तमानकाळाचीं रूपें वाचकांना सहज बनविता येतील. उदाहरणार्थ पहा—

१ प्रथम गण ( गणचिन्ह अ ) = भू ( भव ) = होणें
१ भवति, भवतः, भवन्ति । २ भवसि, भवथः, भवथ । ३ भवामि, भवावः, भवामः ।

२ द्वितीय गण ( गणचिन्ह कांहीं नाहीं ) पा = रक्षण करणें
१ पाति, पातः, पान्ति । २ पासि, पाथः, पाथ । ३ पामि, पावः, पामः ।

३ तृतीय गण ( गणचिन्ह कांहीं नाहीं, परन्तु धातूच्या प्रथम अक्षराचें द्वित्व होतें ) दा = देणें
१ ददाति, दत्तः, ददति । २ ददासि, दत्थः, दत्थ । ३ ददामि, दद्वः, दद्मः ।

४ चतुर्थ गण ( गणचिन्ह य ) क्रुध् = क्रोध करणें
१ क्रुध्यति, क्रुध्यतः, क्रुध्यन्ति । २ क्रुध्यसि, क्रुध्यथः, क्रुध्यथ । ३ क्रुध्यामि, क्रुध्यावः, क्रुध्यामः ।

५ पंचम गण ( गणचिन्ह नु ) सु = रस काढणें
१ सुनोति, सुनुतः, सुन्वन्ति । २ सुनोषि, सुनुथः, सुनुथ । ३ सुनोमि, सुनुवः, सुनुमः ।

६ षष्ठ गण ( गणचिन्ह अ ) चल् = चालणें.
१ चलति, चलतः, चलन्ति । २ चलसि, चलथः, चलथ । ३ चलामि, चलावः, चलामः ।

७ सप्तम गण ( गणचिन्ह न ) हें चिन्ह धातूच्या मध्यें शिरतें. हिंस् = हिंसा करणें.
१ हिनस्ति, हिंस्तः, हिंसन्ति । २ हिनस्सि, हिंस्थः, हिंस्थ । ३ हिनस्मि, हिंस्वः, हिंस्मः ।

८ अष्टम गण ( गणचिन्ह उ ) तन् = पसरणें.
१ तनोति, तनुतः, तन्वन्ति । २ तनोषि, तनुथः, तनुथ । ३ तनोमि तनुवः, तनुमः ।

९ नवम गण ( गणचिन्ह ना ) बंध् = बांधणें.
१ बध्नाति, बध्नीतः, बध्नन्ति । २ बध्नासि, बध्नीथः, बध्नीथ । ३ बध्नामि, बध्नीवः, बध्नीमः ।

१० दशम गण ( गणचिन्ह अय ) चुर् = चोरणें.
१ चोरयति, चोरयतः, चोरयन्ति । २ चोरयसि, चोरयथः, चोरयथ । ३ चोरयामि, चोरयावः, चोरयामः ।

पहा. या युक्तीनें वाचकांना सर्व गणांच्या धातूंचीं वर्तमानकाळाचीं परस्मैपदी रूपें सहज बनवितां येतील. सर्व धातूंना एकच प्रत्यय आहेत. फक्त फरक काय तो गणचिन्हामध्यें आहे. याप्रमाणें वाचकांनीं या सोप्या पद्धतीनें निरनिराळ्या धातूंचीं रूपें बनवावींत.

## संस्कृत-वाक्यानि ।

स मरकपयति तदहं बोधामि । यद्भवति तद्भवतु । ईश्वरः सकलं अगत्पाति । देवदत्तः यज्ञेश्वराय प्रभूतं धनं ददाति । य. पुरुषः कुप्यति [illegible] कथं मनसः शांतिं लभेत् ? ऋत्विजः यज्ञे सोमं सुन्वंति । त्वं कुत्र चलसि ? व्याघ्रः अजं हिनस्ति । त्वं वस्त्रं किं तनोषि ? रांडेमना तमहं बध्नामि । चोरः धनं चोरयति ।

# पाठ ३

## वर्तमानकाळाचे आत्मनेपदी प्रत्यय.

पहिल्या धड्यांत वर्तमानकाळाचे परस्मैपदी प्रत्यय सांगितले व आतां या धड्यांत आत्मनेपदाचे प्रत्यय सांगावयाचे आहेत—

( १ )

वर्तमानकाळ आत्मनेपद.

( प्रथम, चतुर्थ, षष्ठ आणि दशम गण )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| १ प्रथम पुरुष | …ते | …इते | …अन्ते |
| २ मध्यम ,, | …से | …इथे | …ध्वे |
| ३ उत्तम ,, | …ई | …आवहे | …आमहे |

हे प्रत्यय पूर्वीप्रमाणेच धातूंना लागतात व आत्मनेपदाचीं रूपें तयार होतात. प्रथम धातु, त्याच्यापुढें त्या धातूच्या गणाचें चिन्ह व त्याच्यापुढें वरील प्रत्यय लागतात आणि मग आत्मनेपदाचें रूप तयार होतें. जसें—

प्रथम गण ( गणचिन्ह अ )

१ नी ( नय् ) नेणें–१ नय-ते, नये-ते, नय-न्ते। २ नय-से, नये-थे, नय-ध्वे। ३ नये, नया-वहे, नया-महे।

चतुर्थ गण ( चिन्ह य )

४ युध् = लढणें–१ युध्यते, युध्येते, युध्यन्ते। २ युध्यसे, युध्येथे, युध्यध्वे। ३ युध्ये, युध्यावहे, युध्यामहे।

षष्ठ गण ( चिन्ह अ )

६ क्षिप् = फेकणें–१ क्षिपते, क्षिपेते, क्षिपन्ते। २ क्षिपसे, क्षिपेथे, क्षिपध्वे। ३ क्षिपे, क्षिपावहे, क्षिपामहे।

### दशम गण ( चिन्ह अय )

१० चूर्ण् = चूर्ण करणें = १ चूर्णयते, चूर्णयेते, चूर्णयन्ते । २ चूर्णयसे, चूर्णयेथे, चूर्णयध्वे । ३ चूर्णये, चूर्णयावहे, चूर्णयामहे ।

याप्रमाणें या चार गणांच्या धातूंचीं रूपें होतात. बाकीच्या सहा गणांना अर्थात् द्वितीय, तृतीय, पंचम, सप्तम, अष्टम व नवम गणांच्या धातूंना पुढील प्रत्यय लावावयाचे असतात—

### वर्तमानकाल, आत्मनेपदी प्रत्यय.

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| १ प्रथम पुरुष | ...ते | ...आते | ...अते |
| २ मध्यम ,, | ...से | ...आथे | ...ध्वे |
| ३ उत्तम ,, | ...ए | ...वहे | ...महे |

प्रथम सांगितलेल्या प्रत्ययामध्यें व या प्रत्ययामध्यें थोडासाच फरक आहे. पूर्वीच्या प्रत्ययांतील " इ " काराच्याऐवजीं या ठिकाणीं " आ " आहे व आणखीही थोडासा फरक आहे. हे प्रत्यय द्वितीय गणाच्या पुढील सर्व गणांना फारच उपयोगी आहेत, जसें—

### द्वितीय गण ( चिन्ह नाहीं. )

२ आस् = बसणें–१ आस्ते, आसाते, आसते । २ आस्से, आसाथे, आध्वे । ३ आसे, आस्वहे, आस्महे ।

### तृतीय गण ( चिन्ह–धातूच्या पहिल्या अक्षराचें द्वित्व होतें )

३ धा = धारण करणें–१ धत्ते, दधाते, दधते । २ धत्से, दधाते, दद्ध्वे । ३ दधे, दध्वहे, दध्महे ।

### पंचम गण ( चिन्ह नु )

५ अश् = व्यापणें–१ अश्नुते, अश्नुवाते, अश्नुवते । २ अश्नुषे, अश्नुवाथे, अश्नुध्वे । ३ अश्नुवे, अश्नुवहे, अश्नुमहे ।

### सप्तम गण ( चिन्ह न )

७ युज् = जोडणें । – १ युङ्क्ते, युञ्जाते, युञ्जते । २ युङ्क्षे, युञ्जाथे, युङ्ग्ध्वे । ३ युञ्जे, युञ्ज्वहे युञ्ज्महे ।

### अष्टम गण ( चिन्ह उ )

८ कृ = करणें – १ कुरुते, कुर्वाते, कुर्वते । २ कुरुषे, कुर्वाथे, कुरुध्वे । ३ कुर्वे, कुर्वहे, कुर्महे।

### नवम गण ( चिन्ह ना )

९ क्री = विक्री करणें – १ क्रीणीते, क्रीणाते, क्रीणते । २ क्रीणीषे, क्रीणाथे, क्रीणीध्वे । ३ क्रीणे, क्रीणीवहे, क्रीणीमहे ।

पहिल्या, चौथ्या, सहाव्या व दहाव्या गणाच्या धातूंच्या प्रत्ययामध्यें एकमेकांत कोठें कोठें समानता आहे, कोठें विषमता आहे व बाकीच्या सहा गणाच्या प्रत्ययामध्येंही कोठें कोठें समता आहे व कोठें विषमता आहे, हें वाचकांनी नीट पहावें. ही गोष्ट एकदा त्यांना नीट समजली, म्हणजे वर्तमानकाळचीं परस्मै व आत्मनेपदाचीं रूपें बनविण्याचें काम त्यांना बिलकुल अवघड वाटणार नाहीं

## संस्कृत-वाक्यानि ।

सैनिकाः समरभूम्यां शस्त्राणि नयन्ते । वयं तत्र जलं नयामहे । राजा किमर्थमेवं कुप्यते ? अहं कदापि न कुप्ये । स जले प्रस्तरान् क्षिपते । त्वं भूमौ किं क्षिपसे ? वैद्यः काष्ठानि भैषज्यार्थं चूर्णयते । स तत्राऽऽस्ते । वयं अत्राऽऽस्महे । त्वं बहुमूल्यं ऊर्णावस्त्रं धत्से । आत्मा शरीरं धत्ते । ईश: सर्वत्राऽश्नुते । योगी मनः युङ्क्ते । अहं मन युञ्जे । कर्मकारः कर्म कुरुते । इदानीमहं न किमपि कुर्वे । स धनेन धान्यं क्रीणीते ।

---

# पाठ ४

## (लोट्) आज्ञार्थ.

पहिल्या, चौथ्या, सहाव्या व दहाव्या गणाच्या परस्मैपदी धातूंचीं आज्ञार्थ (लोट्) चीं रूपें करावयाचीं असतील, तर त्याकरता पुढील प्रत्ययांचा उपयोग करावा—

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| १ प्र० पु० | -तु | -ताम् | -अन्तु |
| २ म० पु० | -० | -तम् | -त |
| ३ उ० पु० | -आनि | -आव | -आम |

धातु, गणाचें चिन्ह व हे प्रत्यय मिळून वरील चार गणाच्या आज्ञार्थाचीं परस्मैपदी रूपें होतात उदाहरणार्थ पहा—

प्रथम गण (चिन्ह अ)

**नी** = (नय) नेणें – १ नयतु, नयताम्, नयन्तु। २ नय, नयतम्, नयत। ३ नयानि, नयाव, नयाम।

चतुर्थ गण (चिन्ह य)

**तुष्** = संतुष्ट होणें – १ तुष्यतु, तुष्यताम्, तुष्यन्तु। २ तुष्य, तुष्यतम्, तुष्यत। ३ तुष्यानि, तुष्याव, तुष्याम।

षष्ठ गण (चिन्ह अ)

**चल्** = चालणें – १ चलतु, चलताम्, चलन्तु। २ चल, चलतम्, चलत। ३ चलानि, चलाव, चलाम।

दशम गण (चिन्ह अय)

**तड्** = ताडण करणें – १ ताडयतु, ताडयताम्, ताडयन्तु। २ ताडय, ताडयतम्, ताडयत। ३ ताडयानि, ताडयाव, ताडयाम।

याप्रमाणें पहिल्या, चौथ्या, सहाव्या व दहाव्या गणांचीं आज्ञार्थाचीं परस्मैपदी रूपें होतात. आतां बाकीच्या सहा गणांचे आज्ञार्थाचे प्रत्यय पहा—

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| १ प्र० पु० | –तु | –ताम् | –अन्तु |
| २ द्वि० पु० | –हि | –तम् | –त |
| ३ तृ० पु० | –आनि | –आव | –आम |

१ द्वितीय पुरुषाच्या एकवचनामध्यें जेथें पूर्वी कांहींच प्रत्यय नव्हता, तेथें 'हि' प्रत्यय या ठिकाणीं आहे, एवढाच काय तो पूर्वीच्या प्रत्ययांत व या प्रत्ययांत भेद आहे. बाकीचे प्रत्यय पूर्वीप्रमाणेंच आहेत. आतां हे प्रत्यय लावून होणारीं रूपें पहा—

द्वितीय गण ( चिन्ह नाहीं )

अद् = खाणें – १ अत्तु, अत्ताम्, अदन्तु । २ अद्धि, अत्तम्, अत्त । ३ अदानि, अदाव, अदाम ।

तृतीय गण ( पहिल्या अक्षराचें द्वित्व )

दा = देणें – १ ददातु, दत्ताम्, ददतु । २ देहि, दत्तम्, दत्त । ३ ददानि, ददाव, ददाम ।

पंचम गण ( नु )

साध् = सिद्ध करणें – १ साध्नोतु, साध्नुताम्, साध्नुवन्तु । २ साध्नुहि, साध्नुतम्, साध्नुत । ३ साध्नवानि, साध्नवाव, साध्नवाम ।

सप्तम गण ( न )

युज् = जोडणें – १ युनक्तु, युङ्क्ताम्, युञ्जन्तु । २ युङ्ग्धि, युङ्क्तम्, युङ्क्त । ३ युनजानि, युनजाव, युनजाम ।

अष्टम गण ( उ )

कृ = करणें – १ करोतु, कुरुताम्, कुर्वन्तु । २ कुरु, कुरुतम्, कुरुत । ३ करवाणि, करवाव, करवाम ।

( **नियम** – " उ " काराच्या पुढें येणाऱ्या " **हि** " प्रत्ययाचा लोप होतो. या नियमाला अनुसरून " **कुरुहि** " असें रूप झालें नाहीं तर तें " **कुरु** " असेंच झालें )

नवम गण ( ना )

**क्री** = विक्रय करणें – १ क्रीणातु, क्रीणीताम्, क्रीणंतु । २ क्रीणीहि, क्रीणीतम्, क्रीणीत । ३ क्रीणानि, क्रीणाव, क्रीणाम ।

याप्रमाणें दहाही गणाचीं आज्ञार्थाचीं रूपें बनतात आता आत्मनेपदाचीं आज्ञार्थाचीं रूप बनविण्याची रीत पहा—

आज्ञार्थाचे आत्मनेपदी प्रत्यय

| | | | |
|---|---|---|---|
| १ | –ताम् | –इताम् | –अन्ताम् |
| २ | –स्व | –इथाम् | –ध्वम् |
| ३ | –ऐ | –आवहै | –आमहै |

पहिल्या, चौथ्या, सहाव्या व दहाव्या गणाच्या आत्मनेपदी धातूंकरितो हे प्रत्यय आहेत आता यांपासून होणारीं रूपें पहा—

प्रथम गण ( अ )

**बुध्** ( जाणणें )– १ बोधताम्, बोधेताम्, बोधन्ताम् ।
२ बोधस्व, बोधेथाम्, बोधध्वम्।
३ बोधै, बोधावहै, बोधामहै ।

चतुर्थ गण ( य )

**शुध्** = ( शुद्ध होणें ) – १ शुध्यताम्, शुध्येताम्, शुध्यन्ताम् ।
२ शुध्यस्व, शुध्येथाम् शुध्यध्वम् ।
३ शुध्यै, शुध्यावहै, शुध्यामहै ।



# पाठ ५

## षष्ठ गण ( अ )

**क्षिप्** = ( फेकणें ) – १ क्षिपताम्, क्षिपेताम्, क्षिपन्ताम् । २ क्षिपस्व, क्षिपेथाम्, क्षिपध्वम् । ३ क्षिपै, क्षिपावहै, क्षिपामहै ।

बाकीच्या गणांना, आज्ञार्थाची आत्मनेपदी रूपें करावयाची असतांना, पुढील प्रत्यय लागतात—

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| १ | –ताम् | –आताम् | –अताम् |
| २ | –स्व | –आथाम् | –ध्वम् |
| ३ | –ऐ | –आवहै | –आमहै |

पूर्वीच्या प्रत्ययात व या प्रत्ययात फरक इतकाच आहे की, पूर्वीच्या प्रत्ययामध्यें ज्या ठिकाणीं " इ " आहे, तेथें या ठिकाणी " आ " आहे व " अन्ताम् " प्रत्ययाच्या ठिकाणीं " अताम् " प्रत्यय आहे. हाच काय तो फरक आहे. आता याचीं रूपें पहा—

### द्वितीय गण ( ० )

**ईड्** = ( स्तुति करणे ) – १ ईट्टाम्, ईडाताम्, ईडताम् । २ ईट्ट्व, ईडाथाम्, ईड्ढ्वम् । ३ ईडै, ईडावहै, ईडामहै ।

### तृतीय गण ( धातूच्या पहिल्या अक्षराचें द्वित्व )

**भृ** = ( भरणें ) – १ बिभृताम्, बिभ्राताम्, बिभ्रताम् । २ बिभृष्व, बिभ्राथाम्, बिभृध्वम् । ३ बिभरै बिभरावहै, बिभरामहै ।

### पंचम गण ( नु )

**सु** = ( रस काढणें ) – १ सुनुताम्, सुन्वाताम्, सुन्वताम् । २ सुनुष्व, सुन्वाथाम्, सुनुध्वम् । ३ सुनवै, सुनवावहै, सुनवामहै ।

### सप्तम गण ( न )

**इन्ध्** = ( जळणें ) – १ इंधाम्, इंधाताम्, इंधताम् । २ इन्त्स्व, इंधाथाम्, इंध्वम् । ३ इनधै, इनधावहै, इनधामहै ।

### अष्टम गण ( उ )

कृ = ( करणें ) – १ कुरुताम्, कुर्वाताम्, कुर्वताम् । २ कुरुष्व, कुर्वाथाम्, कुरुध्वम् । ३ करवै, करवावहै, करवामहै ।

### नवम गण ( ना )

क्री = ( विकणें ) – १ क्रीणीताम्, क्रीणाताम्, क्रीणताम् । २ क्रीणीष्व, क्रीणाथाम्, क्रीणीध्वम् । ३ क्रीणै, क्रीणावहै, क्रीणामहै ।

याप्रमाणें आज्ञार्थाचीं रूपें बनतात. फक्त प्रत्यय जरी लक्ष्यात राहिले, तरी-सुद्धा रूपें ओळखतां येतात

## संस्कृत–वाक्यानि ।

पक्षिणः पत्राणि नयन्तु । त्वं अनेनान्नेन तुष्य । सर्वेऽश्वा अद्यैव शीघ्रं चलन्तु । अहं चलानि किम् ? त्वं बिडालं न ताडय, परन्तु तं श्वानं अद्यैव ताडय ।

अत्रत्याः सर्वेऽपि मानवाः यद्यद्रोचते तत्तदश्नन्तु । त्वं किमपि मा खाद । यः धनं याचकेभ्यो ददाति, स ददातु । त्वं मह्यं वस्त्रं देहि । अहं तुभ्यं किं ददानि ?

योगी मनः तत्र युनक्तु । त्वमपि तथैव स्वकीयं मनः युङ्ग्धि । सर्वे छात्राः स्वकीयबलवृद्ध्यर्थं व्यायामं कुर्वन्तु । त्वं तु सायंप्रातः यथा स व्यायाम करोति, तथैव कुरु ।

यदहं वदामि तत्त्वं बोधस्व । सोऽपि बोधताम् । त्वं ईश्वरं आत्मशुद्ध्यर्थं ईडिष्व । सर्वे शिष्याः स्वकीयानि वस्त्राणि बिभ्रताम् । त्वं यज्ञे सोमं सुनुष्व । अग्निं त्वं इन्त्स्व ।

# पाठ ६

## ( लङ् ) अनद्यतन भूत ( अपूर्ण भूत )

### परस्मैपदाचे प्रत्यय.

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| १ | ...त् | ...ताम् | ...अन् |
| २ | ...स् | ...तम् | ...त |
| ३ | ...अम् | ...व | ...म |

( लङ् ) अनद्यतन भूताचीं रूपें बनवितेवेळीं धातूच्या पूर्वी " अ " लागतो.

### प्रथम गण ( अ )

नी = ( नय् ) नेणें. १ अनयत्, अनयताम्, अनयन् । २ अनयः, अनयतम्, अनयत । ३ अनयम्, अनयाव, अनयाम ।

### द्वितीय गण ( ० )

ख्या = ( सांगणें ) – १ अख्यात्, अख्याताम्, अख्यन् ( अख्युः ) । २ अख्याः, अख्यातम्, अख्यात । ३ अख्याम्, अख्याव, अख्याम ।

### तृतीय गण ( द्वित्व )

दा = देणें – १ अददात्, अदत्ताम्, अददुः । २ अददाः, अदत्तम्, अदत्त । ३ अददाम, अददाव, अददाम ।

### चतुर्थ गण ( य )

कुप् = ( रागावणें ) – १ अकुप्यत्, अकुप्यताम्, अकुप्यन् । २ अकुप्यः, अकुप्यतम्, अकुप्यत । ३ अकुप्यम्, अकुप्याव, अकुप्याम ।

### पंचम गण ( नु )

साध् = ( सिद्ध करणें ) – १ असाध्नोत्, असाध्नुताम्, असाध्नुवन् । २ असाध्नोः, असाध्नुतम्, असाध्नुत । ३ असाध्नवम्, असाध्नुव, असाध्नुम ।

षष्ठ गण ( अ )

गुंफ् = ( गुंफणें ) – १ अगुंफत्, अगुंफताम्, अगुंफन् । २ अगुंफ, अगुंफतम् अगुंफत । ३ अगुंफम्, अगुंफाव, अगुंफाम ।

सप्तम गण ( न )

पिष् = ( चूर्ण करणें ) – १ अपिनट्, अपिंष्टाम, अपिंषन् । २ अपिनट्, अपिंष्टम् अपिंष्ट । ४ अपिनषम्, अपिंष्व, अपिंष्म ।

अष्टम गण ( उ )

तन् = ( पसरणें ) – १ अतनोत्, अतनुताम्, अतन्वन् । २ अतनो, अतनुतम्, अतनुत । ४ अतनुवम्, अतनुव, अतनुम ।

नवम गण ( ना )

क्री = ( विकत घेणें ) – १ अक्रीणात्, अक्रीणाताम्, अक्रीणन् । २ अक्रीणा, अक्रीणीतम्, अक्रीणीत । ३ अक्रीणाम्, अक्रीणीव, अक्रीणीम ।

दशम गण ( अय )

चर्च् = ( चावणें ) – १ अचर्चयत्, अचर्चयताम्, अचर्चयन् । २ अचर्चय, अचर्चयतम्, अचर्चयत । ३ अचर्चयम्, अचर्चयाव अचर्चयाम ।

परस्मैपदी सर्व धातूंचीं अनद्यतनभूत ( लङ् ) चीं रूपें बनविण्याकरितां हेंच प्रत्यय आहेत आणि सर्व धातूंचीं रूपें बहुधा एकाच नियमानें होतात धातूच्या पूर्वी ' अ ", त्याच्यापुढें धातु त्यापुढें गणाचें चिन्ह व त्या पाठीं पुढें लङ्चा प्रत्यय लावावयाचा असतो सर्व धातूंना एकच प्रत्यय असल्यामुळें रूपें सहज बनविता येतात

# पाठ ७

आता लङ्चे आत्मनेपदाचे प्रत्यय पहा—

## ( लङ् ) अनद्यतन भूत

### आत्मनेपदी प्रत्यय

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| १ | —त | —इताम् | —अन्त |
| २ | —थाः | —इथाम् | —ध्वम् |
| ३ | —इ | —वहि | —महि |

पूर्वीप्रमाणेंच धातूच्या पूर्वी 'अ', त्यापुढें धातु, त्यापुढें गणाचें चिन्ह व शेवटीं प्रत्यय लावावा 'अ + धातु + गणाचें चिन्ह + लङ् चा प्रत्यय' याप्रमाणें रूप बनत असतें करीं तें आता खालील उदाहरणावरून पहा—

प्रथम गण ( अ )

बुध् = ( जाणणें )— १ अबोधत, अबोधेताम्, अबोधन्त । २ अबोधथाः, अबोधेथाम्, अबोधध्वम् । ३ अबोधे, अबोधावहि, अबोधामहि ।

चतुर्थ गण ( य )

शुच् = ( शुद्ध होणें )— १ अशुच्यत, अशुच्येताम्, अशुच्यन्त । २ अशुच्यथाः, अशुच्येथाम्, अशुच्यध्वम् । ३ अशुच्ये, अशुच्यावहि, अशुच्यामहि ।

षष्ठ गण ( अ )

क्षिप् = ( फेकणें )— १ अक्षिपत, अक्षिपेताम्, अक्षिपन्त । २ अक्षिपथाः, अक्षिपेथाम्, अक्षिपध्वम् । ३ अक्षिपे, अक्षिपावहि, अक्षिपामहि ।

दशम गण ( अय )

गण् = ( मोजणें )— १ अगणयत, अगणयेताम्, अगणयन्त । २ अगणयथाः, अगणयेथाम्, अगणयध्वम् । ३ अगणये, अगणयावहि, अगणयामहि ।

बाकीच्या गणांच्या रूपांकरितां पूर्वीच्या प्रत्ययातील " **इताम्** " व " **इयाम्** " च्या ठिकाणीं " **आताम्** " व " **आथाम्** " हे प्रत्यय आहेत, असें समजावें आता हे प्रत्यय लागून बनणारीं रूपें पहा–

**द्वितीय गण ( ० )**

**आस्** = ( बसणें )- १ आस्त, आसाताम्, आसत । २ आस्था, आसाथाम्, आध्वम् । ३ आसि, आस्वहि, आस्महि ।

**तृतीय गण ( द्वित्व )**

**दा** = ( देणें )- १ अदत्त, अददाताम्, अददत । २ अदत्था, अददाथाम्, अदद्ध्वम् । ३ अददि, अदद्वहि, अदद्महि ।

**पंचम गण ( नु )**

**सु** = ( रस काढणें )- १ असुनुत, असुन्वाताम्, असुन्वत । २ असुनुथा, असुन्वाथाम्, असुनुध्वम् । ३ असुन्वि, असुनुवहि, असुनुमहि ।

**सप्तम गण ( न )**

**युज्** = ( युक्त होणें )- १ अयुङ्क्त, अयुञ्जाताम्, अयुञ्जत । २ अयुङ्क्था, अयुञ्जाथाम्, अयुङ्ग्ध्वम् । ३ अयुञ्जि, अयुञ्ज्वहि, अयुञ्ज्महि ।

**अष्टम गण ( उ )**

**तन्** = ( पसरणें )- १ अतनुत, अतन्वाताम्, अतन्वत । २ अतनुथा, अतन्वाथाम्, अतनुध्वम् । ३ अतन्वि, अतनुवहि, अतनुमहि ।

**नवम गण ( ना )**

**क्री** = ( विकत घेणें )- १ अक्रीणीत, अक्रीणाताम् अक्रीणत । २ अक्रीणीथा, अक्रीणाथाम्, अक्रीणीध्वम् । ३ अक्रीणि, अक्रीणीवहि, अक्रीणीमहि ।

याप्रमाणें अनद्यतन भूताचीं रूपें होत असतात. परस्मैपदाचीं व आत्मनेपदाचीं रूपें कशीं बनतात, त्या दोन्ही रीति या एकाव धड्यांत सांगितल्या आहेत. कांहीं धातूंचीं रूपें बनविण्याचे कांहीं विशेष नियमही असतात; परन्तु येथें त्या विशेष गोष्टींचें विवेचन करावयाचें नसून, फक्त सर्व-साधारण नियमच सांगावयाचा आहे.

## संस्कृत–वाक्यानि ।

यदाऽहं तवाऽयं तत्राऽगमं तदा त्वं कुत्र गतः ? यदा स अकुप्यत्तदा त्वं किमकरोः ? यदा तव पुत्री पुष्पाणां मालां अगुंफत् तदा स कुत्र गतः ? यदा त्वमन्नमयाचथस्तदा त्वं अन्नं किं नाऽपिबः ? स त्वां तदा किमपृच्छत् ? त्वं तदा तस्मै किमददाः ? तेन कर्मणा ते सर्वे पुरुषाः किमलाप्नुवन् ? यदाऽहं सर्वाणि भेषजानि सम्यक्तयाऽपिनयम् तदा त्वया तत्र जलं किं नानीतम् ? युद्धेन स्वकीयं यशः सर्वासु दिक्षु स वीरोऽतनोत् । तदा गाः कोऽक्रीणात् ?

त्वमबोधयाः किं यन्मया कथितम् ? यदा स अशुष्यम्, तदा त्वया किं कृतम् ? कस्तत्र तदक्षिपत ? किमर्थं त्वमेवं तदक्षिपः ? त्वमगणयथाः किम् ? अहं नागच्छे । स तत्राहसत् । अहं छात्राय पुस्तकमददां । स सोममसुनुत । योगी परमात्मनि मनः अयुङ्क्त । तत्र यत्रं नावनुत । स वणिक् तत्र नाक्रीणीत ।

# पाठ ८

## विध्यर्थ ( विधिलिङ् )

परस्मैपदी धातूंची विधिलिङ्च्या रूपें बनवण्यासाठीं पुढील प्रत्यय लावावे—

विधिलिङ्-परस्मैपदी प्रत्यय.

| | | | |
|---|---|---|---|
| १ | ...ईत् | ...ईताम् | ...ईयुः |
| २ | ...ईः | ...ईतम् | ...ईत |
| ३ | ...ईयम् | ...ईव | ...ईम |

प्रथम गण ( अ )

बुध् = ( जाणणें )– १ बोधेत्, बोधेताम्, बोधेयुः । २ बोधेः, बोधेतम्, बोधेत । ३ बोधेयम्, बोधेव, बोधेम ।

चतुर्थ गण ( य )

कुप् = ( रागावणें )– १ कुप्येत्, कुप्येताम्, कुप्येयुः । २ कुप्येः, कुप्येतम्, कुप्येत । ३ कुप्येयम्, कुप्येव, कुप्येम ।

षष्ठ गण ( अ )

क्षिप् = ( फेकणें )– १ क्षिपेत्, क्षिपेताम्, क्षिपेयुः । २ क्षिपेः, क्षिपेतम्, क्षिपेत । ३ क्षिपेयम्, क्षिपेव, क्षिपेम ।

दशम गण ( अय )

चुर् = ( चोरणें )– १ चोरयेत्, चोरयेताम्, चोरयेयुः । २ चोरयेः, चोरयेतम्, चोरयेत । ३ चोरयेयम्, चोरयेव, चोरयेम ।

बाकीच्या गणांना विधिलिङ्चे पुढील प्रत्यय लागतात—

| | | | |
|---|---|---|---|
| १ | ...यात् | ...याताम् | ...युः |
| २ | ...याः | ...यातम् | ...यात |
| ३ | ...याम् | ...याव | ...याम |

## संस्कृत वाक्य

इदं गुह्यं वचनं त्वया कस्मै अपि न कथनीयम् । यत्कृत्यं त्वया कर्तव्यं तत्त्वं अधुनैव कुरुष्व । स्तुत्यः खल्वेष तव प्रयत्नः यं त्वं करोषि ।

तिसऱ्या प्रकारचा हा "य" प्रत्यय लावून तयार केलेल्या शब्दांची याप्रमाणे वाचकांनी वाक्यात योजना करावी व आतापर्यंत सांगितलेल्या तिन्ही प्रकारच्या "य" प्रत्ययांतील फरक नीट लक्ष्यात ठेवावा.

### ४ अक

"अक" हाही एक पुष्कळच उपयोगी असा प्रत्यय आहे. कित्येक शब्द या एकाच प्रत्ययानें बनतात; हा प्रत्यय लागला असतां धातूच्या स्वराचा गुण किंवा वृद्धिही होते. जसे "वच् = वाचक" "पच् = पाचक" इत्यादि.

### शब्द

| | |
|---|---|
| कारकः = करणारा | दायकः = देणारा |
| बोधकः = समजून घेणारा | पाचकः = शिजविणारा |
| घातकः = घात करणारा | बाधकः = बाधा करणारा |
| गायकः = गाणारा | याजकः = यज्ञ करणारा |
| चालकः = चालवणारा | वाचकः = वाचक |
| आच्छादकः = आच्छादन करणारा | तोषकः = संतोष करणारा |
| त्रासकः = त्रास देणारा | मोदकः = आनंद देणारा |
| नर्तकः = नाचणारा | वर्धकः = वाढवणारा |
| पालकः = पालक | कर्तकः = कापणारा |
| संहारकः = संहार करणारा | शोधकः = शोध करणारा |
| नाशकः = नाश करणारा | ग्राहकः = ग्रहण करणारा |
| | योजकः = योजना करणारा |

या शब्दांत धातूचा उपांत्य स्वर दीर्घ झाला आहे. किंवा त्याचा गुण किंवा वृद्धिही झाली आहे. परंतु कित्येक धातूंमध्यें स्वरांला गुणादि क्रिया होत नाहींत व कित्येक धातूंचा उपान्त्य स्वर असून सुद्धां, तो स्वर जशाचा तसाच राहतो. याचीं उदाहरणें आतां पहा--

| | |
|---|---|
| जनकः = पिता, जन्मदाता | हिंसकः = हिंसा करणारा |
| वधकः = वध करणारा | आरंभकः = आरंभ करणारा |
| दमकः = दमन करणारा | पीडकः = त्रास देणारा |
| निंदकः = निंदा करणारा | खनकः = खोदणारा |
| अर्चकः = पूजा करणारा | जल्पकः = बडबडणारा |

वाचकांनीं आतां याप्रमाणें शब्द बनवावेत. आतापर्यंतच्या धड्यांतून जे जे शब्द आले आहेत ते त्यांनीं प्रथम पहावेत. म्हणजे त्यांनी अशा प्रकारचे शब्द स्वतः बनविण्याची रीत सुद्धां कळून येईल. ही रीत एकदां कळून चुकली कीं मग वाक्यें बनविण्याचें कामही फारच सोपें आहे. हें ही त्यांना कळून येईल.

## संस्कृत वाक्य ।

तस्य परमात्मनो वाचकः प्रणवोऽस्ति । अस्य पदार्थस्य वाचकः कः शब्दोऽस्ति ? त्वं तस्य गमने किमर्थं बाधको भवसि ? यदा याजकोऽत्राऽऽगमिष्यति तदा यज्ञं समापयिष्यति । तस्य राज्ञो घातकास्ते मनुष्या वधस्थानं नीयन्ते राजपुरुषैः । अस्य पाठशालायाः संचालकोऽध्यापक इदानीं कुत्र गतोऽस्ति ? अस्मिन् विशाले मंदिरे किमर्थं न कोऽपि गायको दृश्यते ? प्रजानां पालको राजा भवति तथैव गवां पालको गोप इति कथ्यते । सर्वेषां प्राणिनां नाशको मृत्युरेव नियतसमये आगच्छति प्राणिनामन्तं करोत्येव । तत्र द्वौ पाचकौ स्तः परंतु न कोऽपि स्वादुकं पक्तुं शक्नोति । मिष्टान्नं बालकाय मोदकं भवति ।

अस्य बालकस्य जनकः कुत्र गत इदानीम् ? साधूनां निंदकः सदैव दुर्जन एव भवति । देवतानामर्चकः साधुरेव मंतव्यः । मनुष्याणां वा प्राणिनां वा

हिंसको दुर्जनः खलु स्थानादस्माद्दूरं गच्छतु । खनको लोहमयेन कुन्तेनैव भूमिं खनति ।

## सूचना

वाचकांनीं याप्रमाणें पुष्कळ वाक्यें बनवावींत. धातूंना प्रत्यय लाऊन त्यांचे शब्द कसे बनवावेत व त्या शब्दाचा वाक्यांत कसा उपयोग करावा, ही गोष्ट वाचकांना आतां समजून आलीच असेल.

---

# पाठ ५

## रामायणम् ।

रामं नमस्कृत्य सुग्रीव उवाच– " एतत्सर्वं मम सैन्यं त्वद्वशे वर्तते । तदिदानीमाज्ञापयितुमर्हसि किं कार्यं मया कर्तव्यमिति । उच्यतां यत्प्राप्तकालं मन्यसे । इति । "

राम उवाच– " ज्ञायतां प्रथमं सीता यदि जीवति वा न । सोऽपि देशो यस्मिन् रावणो वसति । नाऽहमस्मिन् कार्ये प्रभुः । न च लक्ष्मण एतत्कर्म कर्तुं समर्थः । त्वमेव कार्यस्यास्य हेतुः प्रभुः समर्थश्च । इति । "

एवमुक्तः सुग्रीवो नीलहनुमज्जाम्बवदंगदादीन् प्रमुखान्वानरवीरान्दक्षिणां दिशमभिलक्ष्य प्रेषयामास । संदिदेश च " यस्तु मासात्पूर्वमेव निवृत्त्य दृष्टा सीतेति वक्ष्यति स मत्तुल्यविभवो भूत्वा भोगैः सुखं विहरिष्यति इति ।" एवं आज्ञापिताः सर्वे ते वीराः स्वां स्वां दिशं संप्रतस्थिरे ।

सुग्रीवेण यथोद्दिष्टं हनुमानपि दक्षिणां दिशं गन्तुं प्रचक्रमे । गुहागहनदुर्ग-

दीन्यन्वेषमाणाः सर्वे वानरा नैव सीतां ददृशुः। नाऽपि रावणम्। पुनः पुनर्विचिंत्य खिन्ना दीनमानसाः सर्वे समागत्यैकत्र मिलिता एकान्ते वृक्षमूले निपेतुः। मुहूर्तं समाश्वस्ताश्च पुनरेवोथ्थिताः। ततस्ते घोरं ददृशुः सागरं वरुणालयम्। ते सर्वे उपविश्य च विन्ध्यगिरेः पादे चिन्तामापेदिरे।

तदा युवराजोऽङ्गद उवाच। "किमकृतार्थानामस्माकं मरणमेव शरणं वा कश्चिदुपायोऽस्ति। मरणमेव नात्र संशयः। इति।" तत्र जटायुषो भ्राता संपातिर्गृध्रराजस्तत्रोपचक्रमे। सर्वांस्तान् वानरान् संप्रहर्षयन्नकथयत्- "दुरात्मना रावणेन ह्रियमाणा तरुणी मया दृष्टा। श्रूयतां तस्य निलयं रक्षसः। कुबेरस्य साक्षाद् भ्राता एष रावणः। लङ्कामध्यास्ते। इतः समुद्रस्य शतयोजने संपूर्णं विश्वकर्मणा निर्मिता रम्या पुरी लंका। तस्यां राक्षसीभिर्निरुद्धा दीना सीता वसति। अस्य समुद्रस्य लंघने कश्चिदुपायो दृश्यताम्। तत्र गत्वा सीतां प्राप्य समृद्धार्था भविष्यथ। इति।"

ततो दक्षिणसमुद्रस्योत्तरां दिशं प्राप्य ते वीराः संनिवेशं चक्रुः। अंगदस्तु तान् वीरान्संमान्याऽपृच्छत् "क इदानीं समुद्रं लंघयिष्यति? कः सुग्रीवं सत्यसंधं करिष्यति?" इति।

जाम्बवांस्तु तान्सर्वान्विषण्णान्दृष्ट्वा हनूमन्तमब्रवीत् "वीर! किं तूष्णीं स्थितोऽसि? न किमपि जल्पसि? त्वमेव तेजोबलाभ्यां समोऽसि रामलक्ष्मणयोः सुग्रीवस्य च। तदेव ते बलं वीर्यं च यद्गरुडस्य। तव विक्रमश्च वेगेन तुल्यः। त्वं तु वीर्यवान् बुद्धिसंपन्नश्च लंघने प्लवने च समर्थः। स्वच्छंदस्तत्तव मरणं। वयं अद्यैव गतप्राणाः भवानेवाऽस्मासु दाक्ष्यविक्रमसंपन्नः। त्वदीयं द्रष्टुकामा वीर्यं वानरसेना। अत उत्तिष्ठ लंघय महार्णवम्। इति।"

मारुतिस्ततो गिरिं महेन्द्रमारुरोह। भ्रान्तौ मनश्च समाधाय अर्णवं लिलंघयिषुर्बाहुचरणाभ्यां पर्वतं पीडयामास। ततोऽसौ रोमाणि दुधुवे, अनिल इव चकम्पे। महानादं च निननाद, बाहुः स्तंभयामास, आससाद च कटीं, चरणौ च संचुकोच। दूरादाकाशे मार्गमालोकयन् हृदये प्राणान्रोध। पद्भ्यां दृढमव-

हिंसको दुर्जनः खलु स्यात्तस्मादस्माद्दूरं गच्छतु । खनको लोहमयेन खण्डेनैव भूमिं खनति ।

## सूचना

वाचकांनीं याप्रमाणें पुष्कळ वाक्यें बनवावीत. धातूंनां प्रत्यय लाऊन त्यांचे शब्द कसे बनवावेत व त्या शब्दांचा वाक्यांत कसा उपयोग करावा, ही गोष्ट वाचकांना आतां समजून आलीच असेल.

---

# पाठ ५

## रामायणम् ।

रामं नमस्कृत्य सुग्रीव उवाच– " एतत्सर्वं मम सैन्यं त्वद्वशे वर्तते । तदि-दानीमाज्ञापयितुमर्हसि किं कार्यं मया कर्तव्यमिति । उच्यतां यत्प्राप्तकालं मन्यसे । इति । "

राम उवाच– " ज्ञायतां प्रथमं सीता यदि जीवति वा न । सोऽपि देशो यस्मिन् रावणो वसति । नाऽहमस्मिन् कार्ये प्रभुः । [illegible] च लक्ष्मण एतत्कर्म कर्तुं समर्थः । त्वमेव कार्यस्यास्य हेतुः प्रभुः समर्थश्च । इति । "

एवमुक्तः सुग्रीवो नीलहनुमज्जाम्बवदङ्गदादीन् प्रमुखान्वानरवीरान्य-क्षिणो दिशामभिलक्ष्य प्रेषयामास । संदिदेश च " यदद्य मासात्पूर्वमेव निवृत्य रक्षित्वा सीतेति वक्ष्यति स मत्तुल्यविभवो भूत्वा भोगैः सुखं विहरिष्यति इति । " एवं आज्ञापिताः सर्वे ते वीराः स्वां स्वां दिशं संप्रतस्थिरे ।

सुग्रीवेण यथोद्दिष्टं हनुमानपि दक्षिणं देशं गन्तुं प्रचक्रमे । गुहागहनदुर्गा-

दीन्यन्वेषमाणाः सर्वे वानरा नैव सीतां ददृशुः। नाऽपि रावणम्। पुनः पुनः विचिंत्य खिन्ना दीनमानसाः सर्वे समागत्यैकत्र मिलिता एकान्ते वृक्षमूले निषेदुः। मुहूर्तं समाश्वस्ताश्च पुनरेवोचवाः। ततस्ते घोरं ददृशुः सागरं वरुणालयम्। ते सर्वे उपविश्य च विन्ध्यगिरेः पादे चिन्तामापेदिरे।

तदा युवराजोऽङ्गद उवाच। "किमकृतार्थानामस्माकं मरणमेव शरणं वा कश्चिदुपायोऽस्ति। मर्तव्यमेव नात्र संशयः। इति।" तत्र जटायुषो भ्राता संपातिर्गृध्रराजस्तत्रोपचक्रमे। सर्वांस्तान् वानरान् संप्रहर्षयन्नकथयत्- "दुरात्मना रावणेन ह्रियमाणा तरुणी मया दृष्टा। श्रूयतां तस्य निलयं रक्षसः। कुबेरस्य साक्षाद् भ्राता एव रावणः। लङ्कामध्यास्ते। इतः समुद्रस्य शतयोजने संपूर्णे विश्वकर्मणा निर्मिता रम्या पुरी लंका। तस्यां राक्षसीभिर्निरुद्धा दीना सीता वसति। अस्य समुद्रस्य लंघने कश्चिदुपायो दृश्यताम्। तत्र गत्वा सीतां प्राप्य समृद्धार्था भविष्यथ। इति।"

ततो दक्षिणसमुद्रस्योत्तरां दिशं प्राप्य ते वीराः संनिवेशं चक्रुः। अंगदस्तु तान् वीरान्समाभाष्याऽपृच्छत् "क इदानीं समुद्रं लंघयिष्यति? कः सुग्रीवं सत्यसंधं करिष्यति?" इति।

जाम्बवांस्तु तान्सर्वान्विषण्णान्दृष्ट्वा हनूमन्तमब्रवीत् "वीर! किं तूष्णीं स्थितोऽसि? न किमपि जल्पसि? त्वमेव तेजोबलाभ्यां समोऽसि रामलक्ष्मणयोः सुग्रीवस्य च। तदेव ते बलं वीर्यं च यद्गरुडस्य। तव विक्रमश्च तेनैव तुल्यः त्वं च वीर्यवान् बुद्धिसंपन्नश्च लंघने प्लवने च समर्थः। स्वच्छंदस्तस्य मरणं। वयं तु अद्यैव गतप्राणाः भवानेवाऽस्मासु दाक्ष्यविक्रमसंपन्नः। त्वद्वीर्यं द्रष्टुकामा हीयं वानरसेना। अत उत्तिष्ठ लंघय महार्णवम्। इति।"

मारुतिस्ततो गिरिं महेन्द्रमारुरोह। आत्मनो मनश्च समाधाय अर्णवं लिलंघयिषुर्बाहुचरणाभ्यां पर्वतं पीडयामास। ततोऽसौ रोमाणि दुधुवे, अनिल इव चकम्पे। महानादं च निननाद, बाहुः स्तंभयामास, आससाद च कटीं, चरणौ च संचुकोच। दूरादाकाशे मार्गमालोकयन् हृदये प्राणान्रुरोध। पदभ्यां दृढमव-

स्थानं च कृत्वोवाच "यथा रामप्रेरितो बाणो निर्गच्छेत्तथाऽहं लंकां गमिष्यामि। इति। "

एवमुक्त्वा मारुतिर्वेगेन उत्पपात। यं यं स समुद्रस्य देशं जगाम तं तं प्रदेशं स्वकीयांगवेगेन प्रक्षोभयामास। एवं तं प्लवमानं सर्वेऽपि तुष्टुवुः। प्राप्तसमुद्रपारस्तु योजनानां शतस्यान्ते वनराजिं ददर्श। तथा च द्वीपमेकम्। मलयोपवनानि नदीमुखानि च। योजनशतानि तीर्त्वाप्यनिःश्वसन् कपिर्न ग्लानिमधिगच्छति। नगाग्रे स्थितां लंकां परिखाभिरलंकृतां कांचनप्राकारावृतां स ददर्श। तस्याश्च महतीं रक्षां निरीक्ष्य चिन्तयामास। " नेयं शक्या प्रवेष्टुमनेनैव रूपेण। वायुरपि अत्र नाऽज्ञातश्चरेत्। तदहमल्पामेवाद्य रामवस्यार्थसिद्धये लंकामभिपतिष्यामि। " इति।

ततो रात्रौ तूर्णं उत्पत्य लंकां प्रविवेश। नन्दितो भवनान्तवनं ददर्श। रावणस्य तु भवनमर्धयोजनविस्तीर्णं संप्राप्तः। या वैश्रवणे लक्ष्मीस्तामेव रावणगृहे स ददर्श। ततः प्रस्थितो रावणनिवेशितां शालां ददर्श। स तत्र काञ्चनान् दीपानपश्यत्। तत्रैकतमे देशे दिव्यं शयनासनं छत्रं च ददर्श। तस्मिन् शयने सुप्तं राक्षसेन्द्रं मारुतिः प्रेक्षते स्म। तस्य पादमूलगताश्चास्य पत्नीरपि तत्रैव स ददर्श। तासां मध्ये एकान्तविन्यस्ते शयने शयानां चारुरूपिणीं मंदोदरीं ददर्श। तां दृष्ट्वा वायुसुतो हनुमान् सैव सीतेति तर्कयामास।

अचिरादेव तां बुद्धिमपध्य मनस्येव विचारयामास " सीता रामेण वियुक्ता नैवालंकुर्यादात्मानम्। नान्यं नरं सुरं वोपतिष्ठेत। " इति विमृश्याऽन्येषामिति निश्चित्य तत्र भूयश्चचार।

एवमशेषेण हनूमान् रावणान्तःपुरमपश्यत्। परंतु जानकीं नापश्यत्। चिन्तयामास च " मया रावणस्य सर्वाः स्त्रियो दृष्टाः। अत्र वैदेही परिमार्गितुमशक्या। भवतु। अन्यत्र पश्यामि। इदानीं दृष्टा वीथ्यश्च वेदिकाश्च पुष्करिण्यश्च। सर्वं चान्यद् दृष्टम्। परंतु वैदेही नैव दृश्यते। भवतु, विचिनोमि पुनः यावत्पश्यामि। "

इत्युक्त्वाऽशोकवनिकां जगाम । तत्र नाना वापीः पुष्पवाटिकाश्चापश्यत । तत्रैकं वृक्षमारुह्य व्यचिंतयत् “ इतो द्रक्ष्यामि वैदेहीम् । इयमत्र रम्या नलिनी, इमां नूनमेष्यति सीता यदि जीवति । ” एवं ब्रुवन् स सर्वत्र नयने प्रेरयामास ।

ततो मलिनवस्त्रां, राक्षसीभिः समावृतां, दीनां, उपवासकृशां, पुनः पुनर्विश्वसन्तीं, अमलां, तापसीं पुत्रीं समीक्ष्य सैव सीतेति स तर्कयामास । इदम् मनसैव रामं जगाम मशरांस च ां मनुमु । तत्र मैथिलीं दृष्ट्वा मारुतिरतुलं हर्षं लेभे ।

अथ मंगलवादित्रैर्दशग्रीवः प्राबोध्यत । विबुध्य तु सः वैदेहीमेवान्वचिन्तयत् । अशोकवनिकां च प्रविशति स्म । रावणस्तु कामपराधीनः सीतासक्तमना मन्दगतिरभवत् । दृष्ट्वैव तं सीता प्रावेपत तथैव दृदस्येयेपनिद्रा ।

## शब्दार्थ.

| | |
|---|---|
| त्वद्वशे = तुझ्या आधीन | प्राप्तकालं = काळास योग्य |
| मत्तुल्यविभवः = माझ्या इतका वैभवशाली | अशोकवनिका = अशोक नामक उद्यान |
| जटायुः = एक पक्षी, जटायु | निपेतुः = पडले |
| संनिवेशं = निवास | समाश्वस्त = विश्रांति घेतलेले |
| लिलंघयिषुः = ओलांडून जाऊं इच्छिणारा | निलयं = घर |
| नगाग्रं = पर्वताचा अग्रभाग | विषण्ण = खिन्न, दुःखी |
| वीथी = बाजार | ग्लानि = थकवा |
| पुष्करिणी = जलस्थान, तलाव | अशेषेण = सर्व |
| | अमला = मळ नसलेली |
| | वेदिका = वेदी |
| पुष्पवाटिका = बाग | वापी = विहीर |
| नलिनी = कमळांचे स्थान | विबुध्य = जागून |

## समासाः ।

१ वृक्षमूलं = वृक्षस्य मूलम् ।
२ वरुणालयं = वरुणस्य आलयम् ।
३ अकृतार्थः = कृतः अर्थः येन सः कृतार्थः; न कृतार्थः अकृतार्थः ।
४ दुरात्मा = दुष्टः आत्मा यस्य सः ।
५ दक्षिणसमुद्रः = दक्षिणश्चासौ समुद्रश्च ।
६ बुद्धिसंपन्नः = बुद्ध्या सम्पन्नः ।
७ रावणनिषेविता = रावणेन निषेविता ।
८ मलिनवस्त्रा = मलिनं वस्त्रं यस्याः सा ।
९ उपवासकृशा = उपवासेन कृशा ।
१० सीतासक्तमनाः = सीतायां आसक्तं मन यस्य सः ।

---

## पाठ ६

(म. भा. भीष्मपर्व अ. ५१)

ततः श्वेतैर्हयैर्युक्तौ महति स्यन्दने स्थितौ ।
प्रदध्मतुः शंखवरौ हेमरत्नपरिष्कृतौ ॥ २४ ॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः ॥ २५ ॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ २६ ॥

काशिराजश्च शैब्यश्च शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्च महारथः ॥ २७ ॥
पाञ्चाल्यश्च महेष्वासो द्रौपद्याः पञ्च चात्मजाः ।
सर्वे दध्मुर्महाशंखान्सिंहनादांश्च नेदिरे ॥ २८ ॥
स घोषः सुमहांस्तत्र वीरैस्तैः समुदीरितः ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयत् ॥ २९ ॥
एवमेते महाराज प्रहृष्टाः कुरुपांडवाः ।
पुनर्युद्धाय संजग्मुस्तापयानाः परस्परम् ॥ ३० ॥
इति श्री महाभारते भीष्मपर्वणि कौरवव्यूहरचनायां
एकपञ्चाशत्तमोऽध्याय. ॥५१॥

" ततः श्वेतैः हयैः युक्ते महति स्यन्दने स्थितौ वीरौ हेमरत्नपरिष्कृतौ शंखवरौ प्रदध्मतुः ॥ २४ ॥ हृषीकेशः कृष्णः पाञ्चजन्यं, धनंजयोऽर्जुनो देवदत्तं, भीमकर्मा वृकोदरः पौंड्रं महाशंखं दध्मौ ॥ २५ ॥ कुन्तीपुत्रो राजा युधिष्ठिरोऽनन्तविजयं, नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ २६ ॥ काशिराजः च शैब्यः च महारथः शिखंडी च धृष्टद्युम्नः विराटश्च महारथः सात्यकिश्च ॥ २७ ॥ महेष्वासः पांचाल्यः च द्रौपद्याः पञ्च आत्मजाश्च सर्वे महाशंखान् दध्मुः सिंहनादांश्च नेदिरे ॥२८॥ तत्र वीरैः स सुमहान् घोषः समुदीरित. स तुमुलः शब्दः नभः पृथिवीं चैव व्यनुनादयत् ॥ २९ ॥ हे महाराज ! एवं एते कुरुपांडवाः प्रहृष्टाः परस्परं तापयानाः पुनः युद्धाय सञ्जग्मुः ॥ ३० ॥

इति एकपञ्चाशत्तमोऽध्यायः ।
अथ द्विपञ्चाशत्तमोऽध्यायः ।

धृतराष्ट्र उवाच ।

एवं व्यूढेष्वनीकेषु मामकेष्वितरेषु च ।
कथं प्रहरतां श्रेष्ठाः संप्रहारं प्रचक्रिरे ॥ १ ॥



संजय उवाच।

समं व्यूढेष्वनीकेषु सन्नद्धरुचिरध्वजम्।
अपारमिव सन्दृश्य सागरप्रतिमं बलम् ॥ २ ॥
तेषां मध्ये स्थितो राजन् पुत्रो दुर्योधनस्तव।
अब्रवीत्तावकान्सर्वान्युध्यध्वमिति दंशिताः ॥ ३ ॥
ते मनः क्रूरमाधाय समभित्यक्तजीविताः।
पाण्डवानभ्यवर्तन्त सर्वे एवोच्छ्रितध्वजाः ॥ ४ ॥
ततो युद्धं समभवत्तुमुलं लोमहर्षणम्।
तावकानां परेषां च व्यतिषक्तरथद्विपम् ॥ ५ ॥

धृतराष्ट्र उवाच – एवं मामकेषु इतरेषु च अनीकेषु व्यूढेषु प्रहरतां श्रेष्ठाः कथं प्रहारं प्रचक्रिरे ॥ १ ॥ संजय उवाच-व्यूढेषु अनीकेषु समं सन्नद्धरुचिरध्वजं सागरप्रतिमं बलं अपारं सन्दृश्य ॥ २ ॥ हे राजन्! तेषां मध्ये स्थितः तव पुत्रः दुर्योधन. तावकान् सर्वान् "दंशिताः युध्यध्वं" इति अब्रवीत् ॥ ३ ॥ ते सर्वे एव उच्छ्रितध्वजाः मनः क्रूरं आधाय समभि-त्यक्त-जीविताः पाण्डवान् अभ्यवर्तन्त ॥ ४ ॥ ततः तावकानां परेषां च व्यतिषक्तरथद्विपम् तुमुलं लोमहर्षणं युद्धं समभवत् ॥ ५ ॥

मुक्तास्तु रथिभिर्बाणा रुक्मपुङ्खाः सुतेजसः।
संनिपेतुरकुण्ठाग्रा नागेषु च हयेषु च ॥ ६ ॥
तथा प्रवृत्ते संग्रामे धनुरुद्यम्य दंशितः।
अभिपत्य महाबाहुर्भीष्मो भीमपराक्रमः ॥ ७ ॥
सौभद्रे भीमसेने च सात्यकौ च महारथे।
कैकेये च विराटे च धृष्टद्युम्ने च पार्षते ॥ ८ ॥
एतेषु नरवीरेषु चेदिमत्स्येषु चाऽभिभूः।
ववर्ष शरवर्षाणि वृद्धः कुरुपितामहः ॥ ९ ॥

आभिपद्यत ततो व्यूहस्तस्मिन्वीरसमागमे ।
सर्वेषामेव सैन्यानामासीद्व्यतिकरो महान् ॥ १० ॥
सादिनो ध्वजिनश्चैव हतप्रवरवाजिनः ।
विप्रद्रुतरथानीकाः समपद्यन्त पाण्डवाः ॥ ११ ॥
अर्जुनस्तु नरव्याघ्रो दृष्ट्वा भीष्मं महारथम् ।
वार्ष्णेयमब्रवीत्क्रुद्धो याहि यत्र पितामहः ॥ १२ ॥
एष भीष्मः सुसंक्रुद्धो वार्ष्णेय मम वाहिनीम् ।
नाशयिष्यति सुव्यक्तं दुर्योधनहिते रतः ॥ १३ ॥
एष द्रोणः कृपः शल्यो विकर्णश्च जनार्दन ।
धार्तराष्ट्राश्च सहिता दुर्योधनपुरोगमाः ॥ १४ ॥
पाञ्चालान्निहनिष्यन्ति रक्षिता दृढधन्वना ।
सोऽहं भीष्मं वधिष्यामि सैन्यहेतोर्जनार्दन ॥ १५ ॥

रथिभिः मुक्ताः रुक्मपुंखाः सुतेजसः बाणाः अकुंठाग्राः नागेषु च हयेषु च सन्निपेतुः ॥ ६ ॥ तथा संग्रामे प्रवृत्ते भीमपराक्रमः महाबाहुः दंशितः भीष्मः भनुस्यस्य अभिपत्य ॥ ७ ॥ सौभद्रे अभिमन्यौ, भीमसेने च महारथे सात्यकौ च, कैकेये च विराटे च धृष्टद्युम्ने च पार्षते ॥ ८ ॥ एतेषु नरवीरेषु चेदिमत्स्येषु अभिभूः कुरुवृद्धः पितामहः शरवर्षाणि ववर्ष ॥ ९ ॥ ततः तस्मिन् वीरसमागमे व्यूहः अभिपद्यत सर्वेषामेव सैन्यानां महान्व्यतिकर आसीत् ॥ १० ॥ सादिनः ध्वजिनः चैव हतप्रवरवाजिनः विप्रद्रुतरथानीकाः पांडवाः समपद्यन्त ॥ ११ ॥ नरव्याघ्रोऽर्जुनस्तु भीष्मं महारथं दृष्ट्वा क्रुद्धः वार्ष्णेयं कृष्णं अब्रवीत् "याहि यत्र पितामहः" ॥ १२ ॥ हे वार्ष्णेय ! हे कृष्ण ! एष सुसंक्रुद्धो भीष्मः दुर्योधनहिते रतः सुव्यक्तं मम वाहिनीं नाशयिष्यति ॥ १३ ॥ हे जनार्दन ! एष द्रोणः कृपः शल्यः विकर्णश्च दुर्योधनपुरोगमा धार्तराष्ट्राश्च सहिताः ॥ १४ ॥ दृढधन्विना रक्षिताः पाञ्चालान् निहनिष्यन्ति । हे जनार्दन ! सोऽहं सैन्यहेतोः भीष्मं वधिष्यामि ॥ १५ ॥ "

## शब्दार्थः

स्यन्दन = रथ
व्यूढ = व्यूह बनविलेले
मामक = माझा
प्रहरत् = प्रहार करणारा
दंशित = रक्षण केलेला
रुक्म = सुवर्ण
वार्ष्णेय = कृष्ण
परिष्कृत = सुशोभित
अनीक = सैन्य
इतर = दुसरा
सन्नद्ध = बद्ध
तुमुल = भयंकर
व्यतिषक्त = मिळून मिसळून
व्यतिकर = विरोध

शंखांचीं नावें पाञ्चजन्य, देवदत्त, पौंड्र, अनन्तविजय, सुघोष, मणिपुष्पक.

## समासाः ।

१ शस्त्रधर = शस्त्रेषु वर श्रेष्ठ ।
२ हेमरत्नपरिष्कृत = हेमरत्नैः परिष्कृत ।
३ भीमकर्मा = भीमं कर्म यस्य स ।
४ अपारं = न विद्यते पारं यस्य तत् ।
५ समभित्यक्तजीविताः = समभित्यक्तानि जीवितानि यैस्ते ।
६ उच्छ्रितध्वजाः = उच्छ्रिता ध्वजा यैस्ते ।
७ भीमपराक्रम = भीमः पराक्रमो यस्य स ।
८ नरवीर = नरेषु वीरः ।
९ दुर्योधनपुरोगमाः = दुर्योधन पुरोगामी येषां ते ।
१० दृढधन्वा = दृढं धनु यस्य स ।

---

## पाठ ७

### ( ५ ) तृ

" तृ " हा आणखी एक प्रत्यय आहे. या प्रत्ययाचेंही संस्कृतभाषेंत फारच महत्त्व आहे पितृ, मातृ, कर्तृ इत्यादि शब्द याच प्रत्ययाच्या योगानें तयार होतात.

#### शब्द.

कर्तृ = करणारा
भर्तृ = पति
अंकितृ = चिन्ह करणारा
तोलयितृ = वजन करणारा
भक्तृ = भक्षण करणारा
त्रासयितृ = त्रास देणारा
पातृ = रक्षण करणारा
पितृ = पिता
भ्रातृ = भाऊ
द्रष्टृ = पाहणारा
नेतृ = नेता
हन्तृ = ठार मारणारा

धर्तृ = धारण करणारा
रक्षितृ = रक्षण करणारा
अर्चितृ = पूजा करणारा
दातृ = देणारा
धातृ = धारण करणारा
मातृ = माता
दुःखयितृ = दुःख देणारा
ध्मातृ = वाजवून शब्द करणारा
ध्यातृ = ध्यान करणारा
पक्तृ = शिजविणारा
रचयितृ = रचना करणारा

यांची सातही विभक्तींचीं रूपें कशीं चलवाक्यांमध्यें असतात तें वाचकांना माहित आहेच—

### संस्कृत वाक्य ।

विश्वस्य कर्ता भुवनस्य धर्ता ईश्वरः सर्वं जगद्व्याप्नोति । स्त्रियः भर्ता एव सर्वं भूषणम् । राजा सर्वेषां राष्ट्राणां पाता । सर्वैर्भ्रातृभिस्तत्र नागन्तव्यम् ।

हन्तारः सर्वेऽप्यागच्छन्तु । ध्यातारः पुरुषा एकान्तं स्थानं प्राप्य इष्टदेवताध्यानं कुर्वन्तु । पक्तृभिः अन्नं निर्मितं अतस्त्वं आगच्छ भोजनाय ।

## ( ६ ) अन

" अन " हा प्रत्ययही धातूला लाऊन पुष्कळ रूपें बनविता येतात. जसें तप्+अन = तपनः । दम्+अन दमनः इ०

### शब्द ।

| | |
|---|---|
| नन्दनः = आनंददायक | मदनः = मदन |
| दूषणः = दोषी, दोष | साधनं = साधन |
| वर्धनः = वाढवणारा | शोभनः = शोभेनें युक्त |
| रोचनः = प्रकाशयुक्त | तपनः = तापविणारा |
| दमनः = दमन करणारा | जल्पनं = भाषा |
| रमणः = रममाण होणारा | कूर्दनं = आरंभ |
| संक्रन्दनः = कृष्ण | दर्शनं = दर्शन |
| गमनं = गमन | कर्षणं = कृषिकर्म |
| जननं = जन्म | बंधनं = बंधन |
| भंजनं = नाश | भजनं = भजन, पूजा |

### संस्कृत वाक्य ।

ईश्वरस्य भजनं मनुष्यैरवश्यमेव प्रतिदिनं कर्तव्यम् । सूर्यस्य दर्शनं कुरु, पश्य कथं स आकाशे प्रकाशते । दर्पणे मुखं पश्यामि । त्वमपि तं दर्पणमत्रानय । येन साधनेन मनुष्याः अभ्युदयं साधयन्ति तदेव साधनं साधय । स शोभनः पुरुष इदानीमत्रैवागच्छति । त्वमपि तथैव शोभनं आचरणं कुरु । संक्रन्दनो यथा राक्षसान् हन्ति तथैव अन्यैर्मनुष्यैः कर्तव्यम् । इदानीं तत्र गमनं कुरु । तस्य जननं कथमभूत् ?

## ( ७ ) अ

धातूला " अ " प्रत्यय लाऊन पहिल्याप्रमाणेंच शब्द बनविता येतात. जसें—चुर्+अ = चोरः, कुप्+अ = कोपः, मद्+अ = मदः इत्यादि

### शब्द ।

| | |
|---|---|
| चरः = गुप्तचर; चालणारा | नदः = नदी |
| सर्पः = साप | व्रणः = व्रण |
| देवः = देव | कोपः = क्रोध |
| अघं = पाप | अंकः = चिन्ह |
| अंगं = शरीर | अध्यायः = अध्याय |
| अर्कः = सूर्य | क्लेशः = कष्ट |
| गजः = हत्ती | गदः = रोग |
| गंधः = सुवास | चारः = चालणारा, दूत |
| मेघः = मेघ | मदः = गर्व |

" अ " प्रत्ययांत दोन भेद आहेत, एक प्रकारचा " अ " पूर्वीच्या ह्रस्व स्वराचा गुण व वृद्धि करतो व दुसऱ्या प्रकारचा " अ " करीत नाहीं. यामुळें " चर् " या एकच धातूचे " चर आणि चार " असे दोन शब्द होतात. हे दोन्ही प्रत्यय निरनिराळे आहेत. इतकी गोष्ट जरी वाचकांच्या ध्यानांत आली, तरी कांहीं ठिकाणीं गुण झाला व काहीं ठिकाणीं तो झाला नाहीं याचें कारणही त्याना सहज समजून येईल.

### संस्कृत वाक्यें

चारैः पश्यन्ति राजानः । अतो राजानः चारचक्षुष इति कथ्यन्ते । अंगं गलितं । पलितं मुण्डं, दशनविहीनं जातं तुण्डम् । अर्कः आकाशे तपति ।

राजाः युद्धेषु प्रयुज्यन्ते । गदा औषधिप्रयोगेन दूरीक्रियन्ते । अयं मंत्रः यजुर्वेदस्य कस्मिन्नध्याये पठितः ? हे देव ! अत्रागच्छ, मम पूजां गृहाण च ।

## ( ८ ) मान

" मान " प्रत्यय धातूला लाऊन वर्तमानकाळाचा अर्थ दाखवणारे व कर्मणि काळाचाही अर्थ दाखवणारे पुष्कळ शब्द बनविता येतात. जसें "पच्+मान" = पचमानः ( याचेळीं शिजविणारा ) " कृ+स्य+करिष्यमाणः " ( भविष्यकाळीं करणारा ) ॥ प्रत्यय लाऊन वर्तमानकाळाचा अर्थ दर्शविणारा शब्द बनवितांना ज्या गणाचा धातू असेल त्या गणाचें विकरणाचें चिन्ह प्रत्ययापूर्वी लागत असतें. भविष्यकाळच्या प्रत्ययाच्या पूर्वी विकरणाची आवश्यकता नाहीं.

## संस्कृत वाक्य.

जायमानेन तेन सिंहनाद इव शब्दः कृतः। मेधावी स पुरुषो विद्यया शोभमानो जनसमाजेऽतीव विराजते। मूमित्रो दुःखेन व्ययमानोऽपि औषधं न पिबति। भिक्षमाणा भिक्षवः आपणे दृश्यन्ते। कस्माद् ग्रामात्ते आगता इति न ज्ञायते। त्वं सर्वीक्षमाणोऽपि न पश्यसि इति चित्रमेव। एवं त्वरमाणस्त्वं कुत्र गच्छसि? भाषमाणा विद्वांसः सभां भूषयन्ति। शुक्लपक्षे वर्धमानश्चन्द्रमा भवति, तथा कृष्णपक्षेऽपक्षीयमाणो भवति। पूर्णिमायां चन्द्रमा अतीव रोचमानः समुदयति। दास्यमानां दक्षिणां तुभ्यमहं ददे। पचमानोऽपि स सूदः स्वयं किमपि न करोति। हीयमानं च अन्नं भिक्षुभ्यः स शोभनेन वचसा न ददाति। कटुवचोभिर्दत्तं दानं न शोभमानं भवितुमर्हति।

या प्रमाणें वाचनानीं पुष्कळ वाक्यें बनवावीं व जेथें आतां पर्यंत सांगितलेल्या प्रत्ययांचे शब्द येतील, तेथें ते अमुक प्रत्यय लागून शब्द कसे बनले आहेत तें पहावें.

---

## पाठ ८

### रामायणम्।

रावणस्तु तां सीतां तथा दीनां आतुरां कृशां निरानन्दां दृष्ट्वा मधुरैर्वाक्यैरुवाच- "सीते! किं मां दृष्ट्वा भयाददर्शनमिव गन्तुमिच्छसि? प्रिये! अहं त्वां कामये। मयि निषीद। नवानां चैव त्वां न स्पृश्यामि। यौवनं तु ते संजातमतिवर्तते। यद्यदत्र ते पश्यामि यस्मिंस्तस्मिंश्चित्ते मे चक्षुः।

हे विलासिनि ! तव हेतोः पृथिवीमपि विजित्य प्रदास्यामि । रामस्तु जीवति वा न वा शंके । न चापि मम हस्तात्प्राप्तुमर्हति त्वाम् । " इति ।

रावणस्यैतद्वचनं श्रुत्वा तृणमन्तरतः कृत्वा सीता प्रत्युवाच । " मत्तो मनो निवर्तयस्व । स्वजन एव प्रीतिं कुरु । नैवाकार्यं मया कार्यं । निशाचर ! यथा तव तथैवान्येषामपि दाराः खलु रक्ष्याः । अकृतात्मानं अनये रतं राजानमासाद्य समृद्धान्यपि राष्ट्राणि विनश्यन्ति । यथा भास्करस्य प्रभा तथैव रामस्याऽहं पत्नी । तं शरणागतवत्सलं रामचन्द्रमेव प्रसाद्य मां निर्यातयितुमर्हसि । अन्यथा रामशरताडितोऽन्तं गमिष्यसि । " इति ।

राक्षसेश्वरस्तूवाच-" यथा यथा स्त्रीणां प्रियं वक्ता नरो भवति तथा तथा परिभूतो भवति । यानि यानि परुषाणि वाक्यानि ब्रवीषि तेषु तेषु ते वध एव युक्तः । द्वौ मासौ रक्षितव्यौ य एव ते मयाऽवधिः कृतः । अत आरोह मम शयनम् । द्वाभ्यां मासाभ्यामूर्ध्वं भर्तारं मामनिच्छन्तीं त्वां खण्डशश्छेत्स्यन्ति मे सूदाः । " इति ।

सीतोवाच- " नूनं न कोऽपि ते निःश्रेयसि स्थितोऽत्र जनो यस्त्वां न निवारयति कर्मणोऽस्माद्विगर्हितात् । त्वदन्यस्तु मां कश्चित्तु लोकेषु मनसाऽपि प्रार्थयेद्रामपत्नीम् ? अनार्य ! कथं मामेवं व्याहरतस्ते जिह्वाऽपि न शीर्यते । असंदेशाद्रामस्य, तपसोऽनुपालनाच्च केवलं, त्वां न करोमि भस्मसात् । " इति ।

रावणस्तु जानकीं नयने विघूर्ण्यान्ववैक्षत । भुजग इव निश्वसन्नुवाच- " अयमहं नाशयामि त्वां सूर्य इव संध्याम् । " इति ।

इत्येवं तामुक्त्वा शत्रुरावणो रावणः सर्वा राक्षसीः प्रति समादिदेश " यथा सीता मद्वशगा भवति तथा कुरुत । दण्डस्योद्यमनेनाऽपि वैदेहीमानयतैव । " इति ।

धान्यमालिनी राक्षसी ततो दशग्रीवं परिष्वज्योवाच " महाराज ! मया

सह क्रीड, किं तवाऽनया सीतया सह ? अकामां कामयानस्य शोषतप्यते शरीरम् । " इति ।

श्रुत्वैतद्रावणो राक्षसीं धान्यमालिनीमुपहसन्न्यवर्तत । सर्वा एव राक्षस्यस्ततो सीतामभिदुद्रुवुः । सा पुनस्ता राक्षसीरुवाच " न मानुषी राक्षसस्य भार्या भवितुमर्हति । कामं खादत माम् । न तु वो वचः करिष्यामि । दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः । तमेवाऽनुरक्ताऽस्मि सुवर्चला यथा सूर्यं, अरुन्धती वसिष्ठम्, रोहिणी शशिनं, लोपामुद्राऽगस्त्यं, सुकन्या च्यवनं, सावित्री वा सत्यवन्तमिति ।

राक्षस्यस्तु क्रोधमूर्च्छितास्तामधिकतरं भर्त्सयन्ति स्म । अथ हनुमान् शिंशपाद्रुमेऽवलीनः सर्वं तदशृणोत् । विनता नाम्नी राक्षसी तदा सीतामब्रवीत् " सीते ! पर्याप्तमेतावद् भर्तुः स्नेहः प्रदर्शितः । भद्रे ! अतिकृतं व्यसनायैवोपकल्पते । तद्रावणं भर्तारं भजस्व । नोचेत्त्वामिदानीं भक्षयामहे । " इति ।

अशोकवृक्षस्य शाखामालम्ब्य तदा सीता नेत्रजलस्रावैः स्तनौ स्नापयन्ती शोकस्यान्तं अधिगच्छन्ति विललाप च बहुविधम् । हा राम ! हा श्वश्रूः ? हा कौसल्ये ! हा सुमित्रे ! इदानीं जीवितं त्यक्तुमिच्छामि । किंतु सत्य एव जनप्रवादो यदकाले मृत्युर्दुर्लभं एवेति । धिङ् मानुष्यं, धिक्परवश्यताम्, यत्र शक्यं जीवितमपि परित्यक्तुमात्मच्छन्देन । नूनं मम शोकेन देहं त्यक्त्वा देवलोकं गतो भवेल्लक्ष्मणाग्रजः । अथवा नहि तस्य रामस्यार्थो भवेन्मयैषा मया इदानीम् । दृश्यमाने च भवति प्रीतिः यादृश्यतः सौहार्दं कुत. संभवति ? किंवा मे भाग्यक्षय. संजातः यद्गुणार्हेणापि रामेण त्यक्ताऽहम् ? रावणस्य वशं गता तु प्राणानेव त्यक्ष्यामि । इति ।

तच्छ्रुत्वा तत्सर्वं राक्षस्यो रावणायाख्यातुं जग्मुः ।

हनुमांस्ततश्चिंतयामास- ' कथं नु मम वाक्यं सीता शृणुयान्नोद्विजेत च । ' इति संचिन्त्य मतिं चकार । अक्लिष्टकर्माणं सुबन्धुं रामं अनुकीर्तयन्नेव नोद्वेजयिष्यामि सीताम् । श्रावयिष्यामि मधुरेण वचसा सर्वं रामवृत्तान्तम् । तथा

सर्वं समादधे यथा श्रद्धास्यति।" इति। एवं विचिन्त्य वैदेह्याः श्रवणे सर्वं रामचरितं मामूलान्तं व्याजहार, सुग्रीवसख्यं, अन्वेषणार्थं वानरप्रेषणं, अन्वेषणान्तं च।"

श्रुत्वैतज्जानकी विस्मिता। केशसंवृतं वदनमुन्नम्य सीता ऊर्ध्वं अन्ववैक्षत। वानरं भीमसत्त्वं अवलोक्य पुनर्मुमोह च।

हनूमांस्तु द्रुमादवतीर्य प्राञ्जलिस्तां विनीतवेषो भूत्वाऽब्रवीत् "देवि! रामस्य संदेशात्तस्यैव दूतोऽहं त्वत्सकाशमागतः। वैदेहि! रामः कुशली। त्वां च कौशलमब्रवीत्। लक्ष्मणस्य शिरसाऽभिवादनम्।"

श्रुत्वा तत्सीताऽवदत् "लौकिकीयं गाथा बत मां कल्याणीव प्रतिभाति। वर्षशतादपि जीवन्तं नरमानन्दोऽसंशयमेत्येव।"

ततो यथा यथा हनूमान्समीपमुपसर्पति तथा तथा तु रावणमेव परिशंकते। सा तु तदाऽशोकशाखां त्यक्त्वा धरण्यामेवोपाविशत्। उवाच च "मायां प्रविष्टो यदि त्वं रावणो मायावी भूत्वा संतापमुत्पादयसि तन्न शोभनम्। स्वं रूपं परित्यज्य यः परिव्राजको जनस्थाने दृष्टः स एव हि त्वं रावणः। तद्दूरं व्रजेति।"

एवं सीतायाः निश्चयं श्रुत्वा मारुतात्मज उवाच "देवि! नाहं तथा ऽऽस्मि यथा मामवगच्छसि। त्वया पातितान्याभरणानि मयैवोपहृत्य रामाय दत्तानि। स त्वदर्शनात् आर्ये! परितप्यते राघवः। रामःसमित्रबांधवैः हत्वा रावणं त्वां क्षिप्रमेव प्राप्स्यति। रामस्य दूतोऽहम्। रामनामाङ्कितं पश्येदमंगुलीयकम्। प्रत्ययार्थं तव दत्तं महात्मना रामेण। तत् समाश्वसिहि, इति।

## समासाः

१ निरानंदा = आनंदेन रहिता। २ निशाचर = निशायां चरतीति। ३ रामशरताडितः = रामस्य शरः रामशरः, तेन ताडितः।

४ राक्षसेश्वरः – राक्षसानां ईश्वरः । ५ राज्यहीनः=राज्येन हीनः। ६ क्रोधमूर्च्छिता = क्रोधेन मूर्च्छिता । ७ विनीतवेषः = विनीतः वेषः यस्य । ८ मारुतात्मजः= मारुतस्य आत्मज । ९ समित्रबांधवं= मित्रैः बांधवैश्च सहितम् । १० रामनामांकितं = रामनाम्ना अंकितम् ।

| | |
|---|---|
| आतुरा = दुःखी | निरानन्दा = आनंदरहित |
| विश्वसिहि = विश्वास ठेव | स्प्रक्ष्यामि = स्पर्श करीन |
| गात्रं = अवयव | शंके = मला संशय येतो |
| तृणं = गवत | अकार्यं = अयोग्य कार्य |
| दाराः = स्त्री | परुष = कठोर |
| शयनं = बिछाना | सूद = आचारी |
| संदेश = आज्ञा | धान्यमालिनी = राक्षसीचें नांव |
| अतिक्रांतं = अधिक गेलेलें | व्यसनं = दुःख |
| अन्वेषणं = शोधणें | प्रेषणं = पाठविणें |
| उपस्थ = मर करून | द्रुमः = वृक्ष |
| कुशली = आरोग्य पूर्ण | परिव्राजकः = संन्यासी |

---

## पाठ २

( म भा. भीष्मपर्व अ. ५९ )

तमग्रचोद्वासुदेवो यत्तो भव धनञ्जय ।
एष त्वां प्रापयिष्यामि पितामहरथं प्रति ॥ १६ ॥
एवमुक्त्वा ततः शौरी रथं तं लोकविश्रुतम् ।
प्रापयामास भीष्मस्य रथं प्रति जनेश्वर ॥ १७ ॥

चलद् बहुपताकेन बलाकावर्णवाजिना ।
समुच्छ्रितमहाभीमनदद्वानरकेतुना ॥ १८ ॥
महता मेघनादेन रथेनाऽमिततेजसा ।
विनिघ्नन्कौरवाऽनीकं शूरसेनांश्च पांडवः ॥ १९ ॥
प्रायाच्छरणदः शीघ्रं सुहृदां हर्षवर्धनः ।
समापतन्तं वेगेन प्रभिन्नमिव वारणम् ॥ २० ॥
त्रासयन्तं रणे शूरान्मर्दयन्तं च सायकैः ।
सैन्धवप्रमुखैर्गुप्तः प्राच्यसौवीरकेकयैः ॥ २१ ॥
सहसा प्रत्युदीयाय भीष्मः शान्तनवोऽर्जुनम् ।
कोऽहि गाण्डीवधन्वानमन्यः कुरुपितामहात् ॥ २२ ॥
द्रोणवैकर्तनाभ्यां वा रथी संयातुमर्हति ।
ततो भीष्मो महाराज सर्वलोकमहारथः ॥ २३ ॥
अर्जुनं सप्तसप्तत्या नाराचानां समाचिनोत् ।
द्रोणश्च पंचविंशत्या कृपः पंचाशता शरैः ॥ २४ ॥
दुर्योधनश्चतुःषष्ट्या शल्यश्च नवभिः शरैः ।
सैन्धवो नवभिश्चैव शकुनिश्चाऽपि पञ्चभिः ॥ २५ ॥
विकर्णो दशभिर्भल्लै राजन्विव्याध पांडवम् ।
स तैर्विद्धो महेष्वासः समन्तान्निशितैः शरैः ॥ २६ ॥
न विव्यथे महाबाहुर्भिद्यमान इवाऽचलः ।
स भीष्मं पंचविंशत्या कृपं च नवभिः शरैः ॥ २७ ॥
द्रोणं षष्ट्या नरव्याघ्रो विकर्णं च त्रिभिः शरैः ।
शल्यं चैव त्रिभिर्बाणै राजानं चैव पञ्चभिः ॥ २८ ॥
प्रत्यविध्यदमेयात्मा किरीटी भरतर्षभ ।

तं वासुदेवोऽब्रवीत् – " धनंजय ! यत्तो भव । एष त्वां पितामहरथं प्रति प्रापयिष्यामि ॥ १६ ॥ हे जनेश्वर ! एवं उक्त्वा ततः शौरिः कृष्णः तं

लोकविश्रुतं रथं भीष्मस्य रथं प्रति प्रापयामास ॥ १७ ॥ बहुपताकेन चलत्, बलाकावर्णवाजिना समुच्छ्रितं, वानरकेतुना महाभीममनदत् ॥ १८ ॥ महता भीमनादेन अमिततेजसा रथेन पांडवः कौरवानीकं शूरसेनान् च विनिघ्नन् ॥ १९ ॥ शरण्यः सुहृदां हर्षवर्धनः शीघ्रं प्रायात् । प्रभिन्नं वारणं इव तं वेगेन आपतन्तं रणे शूरान् त्रासयन्तं सायकैर्मर्दयन्तं च अर्जुनं सहसा शांतनवः भीष्मः प्रत्युदीयाय ॥ कोहि गांडीवधन्वानं कुरुपितामहादन्यः द्रोणवैकर्तनाभ्यां वा अन्यः रथी अर्जुनं संयातुमर्हति ॥ २०-२३ ॥ महाराज ! ततः सर्वलोकमहारथी भीष्मः नाराचानां सप्तसप्तत्या अर्जुनं समाविध्यत् । द्रोणः पंचविंशत्या, कृपः पञ्चाशता शरैः सैन्धवो नवभिः चैव, शकुनिश्च अपि पंचभिः विकर्णो दशभिः भल्लैः, हे राजन् ! पांडवं विव्याध ॥ तैः समन्तात् निशितैः शरैः विद्धः स महेष्वासः महाबाहुः अर्जुनः भिद्यमानोऽचल इव न विव्यथे । स भीष्मं पंचविंशत्या, कृपं च नवभिः शरैः द्रोणं षष्ट्या, विकर्णं च त्रिभिः शरैः, शल्यं चैव त्रिभिः बाणैः, राजानं दुर्योधनं चैव पंचभिः, हे भरतर्षभ ! अमेयात्मा नरव्याघ्रः किरीटी अर्जुनः प्रत्यविध्यत् ॥ २४-२९ ॥

तं सात्यकिर्विराटश्च धृष्टद्युम्नश्च पार्षतः ॥ २९ ॥
द्रौपदेयाभिमन्युश्च परिवव्रुर्धनंजयम् ।
ततो द्रोणं महेष्वासं गांगेयस्य प्रिये रतम् ॥ ३० ॥
अभ्यवर्तत पांचाल्यः संयुक्तः सह सोमकैः ।
भीष्मस्तु रथिनां श्रेष्ठो राजन्विव्याध पांडवम् ॥३१॥
अशीत्या निशितैर्बाणैस्ततोऽक्रोशन्त तावकाः ।
तेषां तु निनदं श्रुत्वा सहितानां प्रहृष्यताम् ॥ ३२ ॥
प्रविवेश ततो मध्यं नरसिंहः प्रतापवान् ।
तेषां महारथानां स मध्यं प्राप्य धनंजयः ॥ ३३ ॥
चिक्रीड धनुषा राजँल्लक्ष्यं कृत्वा महारथान् ।
ततो दुर्योधनो राजा भीष्ममाह जनेश्वरः ॥ ३४ ॥

चलद् बहुपताकेन बलाकावर्णवाजिना ।
समुच्छ्रितमहाभीमनदद्वानरकेतुना ॥ १८ ॥
महता मेघनादेन रथेनाऽमिततेजसा ।
विनिघ्नन्कौरवाऽनीकं शूरसेनांश्च पांडवः ॥ १९ ॥
मायाच्छरणक्षः शीघ्रं सुहृदां हर्षवर्धनः ।
तमापतन्तं वेगेन प्रभिन्नमिव वारणम् ॥ २० ॥
त्रासयन्तं रणे शूरान्मर्दयन्तं च सायकैः ।
सैन्धवप्रमुखैर्गुप्तः प्राच्यसौवीरकेकयैः ॥ २१ ॥
सहसा प्रत्युदीयाय भीष्मः शान्तनवोऽर्जुनम् ।
कोऽहि गाण्डीवधन्वानमन्यः कुरुपितामहात् ॥ २२ ॥
द्रोणवैकर्तनाभ्यां वा रथी संयातुमर्हति ।
ततो भीष्मो महाराज सर्वलोकमहारथः ॥ २३ ॥
अर्जुनं सप्तसप्तत्या नाराचानां समाचिनोत् ।
द्रोणश्च पंचविंशत्या कृपः पंचाशता शरैः ॥ २४ ॥
दुर्योधनश्चतुःषष्ट्या शल्यश्च नवभि. शरैः ।
सैन्धवो नवभिश्चैव शकुनिश्चाऽपि पञ्चभिः ॥ २५ ॥
विकर्णो दशभिर्भल्लै राजन्विव्याध पांडवम् ।
स तैर्विद्धो महेष्वासः समन्तान्निशितैः शरैः ॥ २६ ॥
न विव्यथे महाबाहुर्भिद्यमान इवाऽचलः ।
स भीष्मं पंचविंशत्या कृपं च नवभिः शरैः ॥ २७ ॥
द्रोणं षष्ट्या नरव्याघ्रो विकर्णं च त्रिभिः शरैः ।
शल्यं चैव त्रिभिर्बाणै राजानं चैव पञ्चभिः ॥ २८ ॥
प्रत्यविध्यदमेयात्मा किरीटी भरतर्षभ ।

तं वासुदेवोऽब्रवीत् – " धनंजय ! यत्तो भव । एष त्वां पितामहरथं प्रति प्रापयिष्यामि ॥ १६ ॥ हे जनेश्वर ! एवं उक्त्वा ततः शौरिः कृष्णः तं

लोकविश्रुतं रथं भीष्मस्य रथं प्रति प्रापयामास ॥ १७ ॥ बहुपताकेन चलता, बलाकावर्णवाजिना समुच्छ्रितं, वानरकेतुना महाभीममनदत् ॥ १८ ॥ महता भीमनादेन अमिततेजसा रथेन पांडवः कौरवानीकं शूरसेनान् च विनिघ्नन् ॥ १९ ॥ शरणदः सुहृदो हर्षवर्धनः शीघ्रं प्रायात् । प्रभिन्नं वारणं इव तं वेगेन आपतन्तं रणे शूरान् त्रासयन्तं सायकैर्मर्दयन्तं च अर्जुनं सहसा शांतनीः भीष्मः प्रत्युदीयाय ॥ कोऽहि गांडीवधन्वानं कुरुविश्वामहाद्रूपः द्रोणवैकर्त-नाभ्यां वा अन्यः रथी अर्जुनं संयातुमर्हति ॥ २०-२३ ॥ महाराज ! तव सर्व-लोकमहारथो भीष्मः नाराचानां सप्तसप्तत्या अर्जुनं समाचिनोत् । द्रोणः पंच-विंशत्या, कृपः पञ्चाशता शरैः सैन्धवो नवभिः चैव, शकुनिश्च अपि पंचभिः विकर्णो दशभिः भल्लैः, हे राजन् ! पांडवं विव्याध ॥ तैः समन्तात् निशितैः शरैः विद्धः स महेष्वासः महाबाहुः अर्जुनः भिद्यमानोऽचल इव न विव्यथे । स भीष्मं पंचविंशत्या, कृपं च नवभिः शरैः द्रोणं षष्ट्या, विकर्णं च त्रिभिः शरैः, शल्यं चैव त्रिभिः बाणैः, राजानं दुर्योधनं चैव पंचभिः, हे भरतर्षभ ! अमेयात्मा नरव्याघ्रः किरीटी अर्जुनः प्रत्यविध्यत ॥ २४-२९ ॥

तं सात्यकिर्विराटश्च धृष्टद्युम्नश्च पार्षतः ॥ २९ ॥
द्रौपदेयाभिमन्युश्च परिवव्रुर्धनंजयम् ।
ततो द्रोणं महेष्वासं गांगेयस्य प्रिये रतम् ॥ ३० ॥
अभ्यवर्तत पांचाल्यः संयुक्तः सह सोमकैः ।
भीष्मस्तु रथिनां श्रेष्ठो राजन्विव्याध पांडवम् ॥३१॥
अशीत्या निशितैर्बाणैस्ततोऽक्रोशन्त तावकाः ।
तेषां तु निनदं श्रुत्वा संहितानां प्रहृष्यवत् ॥ ३२ ॥
प्रविवेश ततो मध्यं नरसिंहः प्रतापवान् ।
तेषां महारथानां स मध्यं प्राप्य धनंजयः ॥ ३३ ॥
चिक्रीड धनुषा राजँल्लक्ष्यं कृत्वा महारथान् ।
ततो दुर्योधनो राजा भीष्ममाह जनेश्वरः ॥ ३४ ॥

## शब्दार्थ.

यत्तः = तयार
बलाका = सारसपक्षी
सैन्धव = सिन्धु देशाचा वीर
वैकर्तन = कर्ण
न्यस्तशस्त्रः = ज्यानें शस्त्र ठेवलें आहे.
धिक् = धिक्कार

शौरिः = कृष्ण
वानरकेतु = वानरचिन्हाचा ध्वज असलेला अर्जुनाचा रथ
निशित = तीक्ष्ण
फाल्गुन = अर्जुन
संसक्त = मिळालेला

### समासाः ।

१ पितामहरथ=पितामहस्य रथ । २ लोकविश्रुतः=लोके विश्रुत. ।
३ जनेश्वर =जनानां ईश्वरः । ४ हर्षवर्धन.=हर्षं वर्धयतीति ।

---

## पाठ १०

### १ इष्णु

या धड्यात आता आपणास काही विशेष उपयोगी प्रत्यय सांगावयाचे आहेत. त्यांपैकीं " इष्णु " हा एक प्रत्यय आहे. या प्रत्ययाचा उपयोग पुष्कळ ठिकाणीं होत असतो. " अलंकृ " धातुला " इष्णु " प्रत्यय लावून " अलंकरिष्णु " ( अलंकार धारण करण्याची इच्छा करणारा ) अशा प्रकारचा शब्द बनविता येतो. या प्रमाणेंच अन्य धातूंपासूनही शब्द बनविता येतो. या प्रत्ययाचे इष्+नु असे

दोन भाग केले तर पहिला " इष् " भाग इच्छार्थ धातूंचा बोध करतो. दुसरा " नु " हा भाग प्रत्यय समजावा. यावरून हे दोन्ही भाग मिळून इच्छा दर्शविणारा शब्द बनतात ही गोष्ट दिसून येईल.

## शब्द.

| | |
|---|---|
| अलंकरिष्णु = अलंकाराची इच्छा करणारा | रोचिष्णु = प्रकाशणारा |
| वर्धिष्णु = वाढण्याची, इच्छा करणारा | प्रभविष्णु = प्रभाव असणारा |
| सहिष्णु = सहन करणारा | संचरिष्णु = संचार करणारा |
| | पारयिष्णु = पार होणारा |

## संस्कृत वाक्य ।

प्रभविष्णुना विष्णुना राक्षसान् संहृत्य देवराज्यं संवर्धितम् । वर्धिष्णोरर्जुनवीरस्य भारतीये युद्धे विशेष एव प्रभावः प्रकाशितः। अलंकरिष्णुना बालकेन बहवोऽलंकाराः स्वशरीरस्योपरि धृताः । संचरिष्णुना आचार्येण सर्वस्मिन्नेव राष्ट्रेऽस्मिन्वर्षे संचारः कृतः । नदीं पारयिष्णुना सैन्येन बह्वयो नौका गृहीत्वा परतीरगमनाय महान्यत्नः कृतः, परंतु महता जलवेगेन बाधितास्ते पारगमनाय असमर्था भूत्वैव प्रतिनिवृत्ताः ।

### १० स्नु

याची रूपें पुढील प्रमाणें होतात—

| | |
|---|---|
| जिष्णु = जयशील | भूष्णु = वसतिची इच्छा करणारा |
| स्थास्नु = राहणारा | ग्लास्नु = थकलेला |

### ११ नु

" नु " प्रत्यय लाऊन अनेक प्रकारचे शब्द बनवितां येतात, ते असे—

| | |
|---|---|
| गृध्नु = लोभी | धृष्णु = धैर्यशाली |
| त्रस्नु = भीरु | क्षिप्नु = फेंकणारा |

### ११ त

धातूला " त " हा प्रत्यय लावला असतां भूतकालाचा अर्थ दर्शविणारा बनवितां येतो. हे शब्द खालीं दाखविल्याप्रमाणें बनवितां येतात–

भूत = झालेला
कृत = केलेला
श्रुत = ऐकलेला
जित = जिंकलेला
मुदित = आनंद झालेला
त्यक्त = सोडलेला
हृष्ट = हर्ष झालेला
पीत = प्यालेला
अधीत = शिकलेला
पूत = पवित्र केलेला
स्थित = राहिलेला
गत = गेलेला
नीत = नेलेला
प्रापित = पोंचविलेला

ज्ञात = जाणलेला
जात = जन्मलेला
स्तुत = प्रशंसा केलेला
स्नात = स्नान केलेला
त्रात = रक्षण केलेला
आकृष्ट = आकर्षण केलेला
गीत = गाइलेला
दग्ध = जाळलेला
यात = गेलेला
क्षुब्ध = क्षोभ उत्पन्न झालेला
दत्त = दिलेला
पठित = पठन केलेला
आनीत = आणलेला
उक्त = बोललेला

प्रत्येक धातूचा भूतार्थक शब्द सर्वसाधारणपणें असाच बनवावयाचा असतो व भूतक्रियेचा अर्थ दाखवावयाचा असतांना याचा उपयोगही पुष्कळच केला होत असतो. प्रत्यक्ष क्रियेचा अर्थ दाखवावयाचा असला, तरी सुद्धां या शब्दाचा विशेष उपयोग होतो म्हणून या शब्दाचें महत्व बरेंच आहे.

## संस्कृत-वाक्यें.

यः पाठः भवद्भिः पाठितः स मयाऽधीतः । यत्त्वया उक्तं तन्मया श्रुतम् । यत्तेनानीतं तन्मया गृहीतं स्वगृहे स्थापितं च । यथा त्वया जलं पीतं तथा

अहं पातुं न शक्नोमि । यदि त्वं तेन गीतेन हृष्टोऽसि तर्हि तद्गीतं पुनः शृणु । तत्रैव स्थितः सन् त्वं सर्वं नाटकं पश्यसि । यदि तेन पुस्तकं मया नीतं तर्हि शोभनं जातं । सर्वाणि वस्त्राणि दग्धानि न सन्ति । गृध्नुना यत्प्रशासितं तत् साधु । धृष्णुना वीरेण यत्कृतं तदेव साधु । जिष्णुना विजयेन युद्धं कृतम् । भूष्णुना विशेषः प्रयत्नः कर्तव्यः येन तस्याऽभ्युदयो भवेत् ।

### १३ न

" न " हाही एक फारच उपयोगी प्रत्यय आहे. हा लाऊन शब्द बनविता येतात, ते असे—

| | |
|---|---|
| भिन्न = विभिन्न | छिन्न = छेदलेला |
| म्लान = फिक्कट झालेला | भग्न = तुटलेला |
| ग्लान = थकलेला | शीर्ण = सुकून पडलेला |

### १४ तवत् ।

" तवत " हा आणखी एक प्रत्यय आहे. धातूला हा प्रत्यय लाऊन पुष्कळ शब्द बनविता येतात. ते असे—

| | |
|---|---|
| स्नातवत् = स्नान केलें | कृतवत् = केला |
| ज्ञातवत् = समजून घेतलें | आश्रितवत् = आश्रय केला |
| उक्तवत् = बोलला | श्रुतवत् = ऐकला |
| जितवत् = विजय मिळविला | भक्षितवत् = भक्षण केला |
| बोधितवत् = जागलेला | खनितवत् = खोदलेला |
| हृतवत् = हरण केलेला | मर्षितवत् = सहन केलेला |

## संस्कृत वाक्य ।

किं स तस्मिन् नद्यां स्नातवान् ? यद्यां त्वं सत्कर्म कृतवान् तदा तेन किमुक्तम् ? कदा त्वं पूर्वं श्रुतवान् ? कः मोदकान् अद्य भक्षितवान् ?

या प्रमाणें आतापर्यंत एकंदर चौदा प्रत्यय सांगून त्यापासून पुष्कळच उपयोगी

असे निरनिराळे अनेक शब्द कसे बनविता येतात तें सांगितलें. आतां वाचकांनीं असे शब्द जेथें एखादें संस्कृत वाक्य आढळेल तेथें ओळखण्याचा प्रयत्न करावा. शिवाय अमुक प्रत्ययापासून अमुक एक शब्द बनलेला आहे येवढें तरी ओळखण्याची वाचकांनीं खटपट करावी.

---

## पाठ ११

### रामायणम् ।

स्वयं जानकी भर्तुः करविभूषितं अंगुलीयकं संप्राप्य मुदिताऽभवत् । वदनं च तस्या हर्षयुक्तं बभूव । भर्तुः संदेशहर्षिता सीता हनूमंतं प्रियं कृत्वा प्रशशंस विक्रान्तस्त्वम् । एकेनैव येन इदं राक्षसस्थानं प्रधर्षितम् । शतयोजनविस्तीर्णः सागरो मकरालयो गोष्पदीकृतस्त्वया । नहि त्वां प्राकृतं मन्ये । न ह्यपरीक्षितं प्रेषयिष्यति रामचन्द्रः । कच्चिन्न व्यथते रामः ? कच्चिन्न मयि विगतस्नेहः ? कच्चिन्नान्यमनाः ? कच्चिद् द्रक्ष्यामि रावणं हतं रामेण ? इति ।

मारुतिस्तु साञ्जलिः प्रत्युवाच " न त्वामिहस्थां जानीते रामः । श्रुत्वैव तु काकुत्स्थो हतराक्षसां लंकां करिष्यति । अनिद्रो हि सततं रामः । सुप्तोऽपि सीतेति व्याहरन्प्रतिबुध्यते । " इति ।

सीतास्वैतच्छ्रुत्वोवाच– " अमृतं विषसंसृष्टं भाषितं त्वया । यच्च नान्यमना रामो यच्च शोकपरायण इति । ऐश्वर्ये वा सुविस्तीर्णे व्यसने वा सुदारुणे कृतान्तो हि परमं रज्ज्वेव बद्ध्वा परिकर्षति विधिर्नूनमसंहार्यः । कदा रावणं सूदयित्वा मां द्रक्ष्यति पतिः । वाच्यस्त्वया स त्वरस्वेति । एतत्संवत्सरान्तं हि मम जीवितं । द्वावेव मासौ शेषौ । रावणस्तु प्रयत्नेन भ्रात्रा विभीषणेनानुनीतः मां धर्षितुं न प्रयतति । विभीषणसुतया कलयैतदाख्यातम् । " इति ।

मारुतिरुवाच– " सीते ! अद्यैव त्वां राक्षसान्मोचयामि । उपारोह मम पृष्ठम् । संतरिष्यामि त्वया सागरम् । " इति ।

सा प्रत्यब्रवीत्– " अयुक्तं त्वया सह मम गमनम् । भर्तुर्भक्त्या चान्यस्य गात्रमपि स्वेच्छया स्प्रष्टुं नेच्छेयम् । रावणस्य हननमेव रामाय योग्यम् । " इति ।

मारुतिस्ततो रामसंदेशार्थमभिज्ञानमयाचत । चूडामणिं तस्मै दत्त्वोवाच सीता– " अभिज्ञानोऽयं रामस्य । " इति । सोऽपि वैदेहीमभिवाद्य गमनायोपचक्रमे चिन्तयामास च– " स एवार्थसाधने समर्थो योऽर्थं बहुधा वेद । इदं दशास्यस्य नन्दनोपमं वनम् विध्वंसयामि तावत् भग्नेऽस्मिन्वने कोपं करिष्यति रावणः । " इति ।

आरामञ्च ततो भङ्क्तुमारभत मारुतिः । बभञ्ज च प्रमदावनम् । रूपं चात्मनः सुमहत्कृत्वा दर्शयन्राक्षसीनां विगतनिद्राणाम् पुरतः सर्वास्तत्रत्या राक्षसी रावणाय न्यवेदिषुः सीतावादवृत्तम् । चिताग्निरिव रावणो जज्वाल । शोकाभ्यां तस्य नेत्राभ्यां सार्चिषोऽश्रुबिन्दवः प्रापतन् । किंकरान्नाम च राक्षसान् हनूमतो निग्रहार्थं व्यादिदेश । ते सर्वे सैनिकाः कूटमुद्गरपाणयो भूत्वा ययुः । हनूमानपि लाङ्गूलं क्षितावाविध्य महाध्वनि निननाद । तोरणे समवस्थितस्तद्दारुणं भीममायसं परिघमासाद्य किंकरराक्षसानवधीत् । कतिचिद्धता रावणाय न्यवेदयन् । तदा रावणेन सप्तार्चिर्वर्चसो मन्त्रिणः सप्त सुताः प्रेरिताः । तेऽपि हनूमता व्यापादिताः । तदा सर्वं सैन्यं दशदिशोऽगमत् ।

तदा रावणसूनुरिन्द्रजित्स्वयं तत्र संग्रामे प्राप्तः । हनुमानपि व्यवर्धत । इन्द्रजिदस्त्रतस्त्वविमुक्तमवध्यामीति ज्ञात्वाऽस्त्रेण निजग्राह कालमुष्टिभिर्हन्यमानश्च मारुतिः समीपं राक्षसेन्द्रस्य प्रापितः । रावणस्तु चिन्तयामास । किमेष भगवान् नन्दी, प्रहसितो मया येन पुरा शप्तोऽस्मि कैलासे उत बाणो वाऽसुरः । इति । तथ्यमस्तु वानरश्रेष्ठोऽप्येनं वाक्यमुवाच " हे राक्षसेन्द्र ! सुग्रीवसंदेशादत्र

प्राप्तोऽहम् । वानरेशस्त्वां भ्राता कुशलमब्रवीत् । भवान् कृतदारोऽष्टधर्मार्थश्च, परदारान्नोपरोद्धुमर्हति । त्रैलोक्ये को राघवस्य व्यलीकं कृत्वा सुखमाप्नुयात् रामसुग्रीवसख्यमात्मनो हितं बुध्यस्व । ” इति ।

क्रुद्धो रावणस्तस्य वधमाज्ञापयामास । विभीषणस्तु नाऽनुमेने वधमस्य । विशेषतो दूतस्य । रावणः पुनरादिदेश- " अस्य लाङ्गूलं जीर्णैः कार्पासपटैः संवेष्ट्य तैलेन परिषिच्य तदग्निना संयोजनीयमिति " राक्षसास्तथा चक्रुः । मारुतिस्तु तथोर्ध्वं तेनाग्निना लंकां दाहयामास ।

ततो मारुतिः पाशांश्छित्वोत्पपात । वेगेन परिघेण पुनः पुरद्वारस्य रक्षिणः सूदयामास । सविद्युदिव मेघः प्रदीप्तलांगूलो हनूमान् लंकाभवनेषु विचचार । विभीषणस्य गृहं वर्जयित्वा सर्वान्गृहान् ददाह कपिः । वानररूपेणैवोऽग्निरेवायाति इति कम्पमानाः स्त्रियो गृहेभ्यो बहिर्निरगच्छन् । यथा रुद्रेण त्रिपुरं तथा तेन लंकापुरं प्रदग्धम् । एवं वनं भङ्क्त्वा, लंकां दग्ध्वा, रक्षांसि हत्वा, सर्वान्संपीड्य च वानरश्रेष्ठो हनूमान् लांगूलाग्निं समुद्रे निर्वापयामास ।

मारुतिस्तु तत ऊर्ध्वमरिष्टगिरिमारुरोह । मारुत इव मारुतात्मज उत्तरां दिशं समुद्रस्य प्रपेदे । तस्य वेगं निशाम्य इतस्ततः सर्वे वानरा हनूमन्तं समुत्पेतुः । हृष्टमानसास्तं परिवार्योपतस्थिरे च । हनूमांस्तु जाम्बवत्प्रमुखान् गुरून् अंगदं चायन्दत । संक्षेपेण सर्वं वृत्तान्तं तेभ्यो न्यवेदयत् । सर्वे ततः प्रियाख्यानोन्मुखाः महेन्द्राग्रात् पुप्लुवुः । सर्वे ते वीरा रावणनिर्दलने निश्चितमतयो युद्धाभिनन्दिनश्च कृतकार्यत्वात् संतुष्टचेतसो भूत्वा आगत्य प्रस्रवणगिरिं, प्रणम्य रामं ससुग्रीवं, प्रवृत्तिं सीतायाः प्रोचुर्युवराजपुरस्कृताः । रामाय मणिं दत्त्वा हनूमान्प्राञ्जलिरब्रवीत् “ राम ! त्वयि सर्वं मनोरथं संन्यस्य सीता जीवति । अधःशायिनी विवर्णाङ्गी पद्मिनीव हिमागमे मर्तव्यकृतनिश्चया सा । शनैर्मया विश्वासिता । सा तु सीता संदिदेश मास जीवितं धारयिष्यामि । ऊर्ध्वं मासान्न जीवेयम् ’ इति ।

तं मणिं हृदये कृत्वा रामो रुरोद। स च सुग्रीवमब्रवीत् " यथैव वत्सस्य स्नेहाद्वत्सला धेनुस्तथैव ममापि हृदयं मणिश्रेष्ठस्यास्य दर्शनात् द्रवति। इदं मणिरत्नं मम श्वशुरेण वैदेह्या विवाहकाले मूर्धनि बद्धम्। हा सीते! अहं क्षणमपि जीवितुं न शक्नोमि सीतां विहाय। कथं तिष्ठसि सीते घोराणां राक्षसीनां मध्ये। " इति।

अंक १९






# संस्कृत स्वयं शिक्षक.

(संस्कृत भाषेचें अध्ययन करण्याचा सोपा उपाय)

भाग १९ वा।



लेखक आणि प्रकाशक.
श्रीपाद दामोदर सातवळेकर.
स्वाध्याय मंडळ, औंध (जि. सातारा)

---

द्वितीय आवृत्ति.



शक १८५१, सन १९३०

---

मूल्य ८ आने

# वेदाचा अभ्यास.

या भागापासून वेदाच्या अभ्यासास सुरवात होत आहे. पूर्व
च्या सर्व भागांचा वाचकांनीं नीट अभ्यास केला असेल त
या पुढील वेदाचा अभ्यासही त्यांना पुष्कळच सोपा वाटेल म्ह
णून पूर्वीच्या भागांची एकवार उजळणी करावयाची असेल त
त्यांनीं पुनः एकदां मागील सर्व भागांचें नीट निरीक्षण करावें व
मग या वेदाच्या अभ्यासास सुरवात करावी मूळ पाया नी
तयार झाला असेल तरच त्यावर उभारावयाची इमारतही चांग
ली बळकट होऊं शकते. या पुस्तकांत वेदाच्या अभ्यासाची
इतकी सोपी रीत सांगितली आहे कीं ती रीत वाचकांना सहज
समजूं शकेल परंतु अभ्यासाची रीती कितीही सुबोध रीतीं
सांगितली असली तरी तिचा अभ्यास नीट होण्याकरितां वाच
कांनीं स्वतः ही थोडाबहुत प्रयत्न केलाच पाहिजे म्हणून वाचकांनी
आपापल्यापरी शक्य तो प्रयत्न करून या सोप्या पद्धतिपासून
आपला अधिकांत अधिक फायदा करून घ्यावा

स्वाध्याय मंडळ औंध
(जि० सातारा)
१९।२।३०

लेखक
श्री० दा० सातवळेकर.

---

मुद्रक व प्रकाशक—श्री० दा० सातवळेकर.
भारत मुद्रणालय, औंध (जि० सातारा)



# संस्कृत स्वयं शिक्षक.

भाग १९ वा

## पाठ १.

वेदाचा अभ्यास करण्याकरितां शब्द कसे तयार होतात तें समजण्याची अत्यंत आवश्यकता आहे. धातूला प्रत्यय लाऊन शब्द बनविण्याची रीति यापूर्वी सांगितलेली आहेच. शब्दांत मूळ धातूचा अर्थच मुख्य असतो व यालाच यौगिक अर्थ असें म्हणतात. यौगिक अर्थामध्यें धातूच्या मूळ अर्थाचें प्राधान्य असतें. जरी एखादा शब्द दिसण्यांत सारखा दिसला तरी तो अनेक प्रकारांनीं सिद्ध झालेला असेल तर त्यांचे अनेक अर्थ होऊं शकतात. लौकिक संस्कृत भाषेंत सुद्धां एकाच शब्दाचे अनेक अर्थ होणारे पुष्कळच शब्द आहेत. तसेच ते वेदामध्यें ही आहेत. हा विषय आणखी थोडासा स्पष्टपणें समजण्याकरतां एक दोन उदाहरणें घेऊन शब्द कसे सिद्ध होतात तें पाहूं—

### "असुर"

हा असुरशब्दच प्रथम पहा. पाहतां क्षणींच हा शब्द नञ्तत्पुरुष आहे असें दिसतें. याचा विग्रह असा—

**न सुरः असुरः ।**

"जो सुर नव्हे तो असुर" असें समजणें या विग्रहा प्रमाणें योग्य आहे. या विग्रहानें बनलेला हा शब्द "अ-सुर" असा लिहावा.

वेदामध्यें हा अर्थ फारच कमी वेळां आलेला आहे. हा आधुनिक ग्रंथांत फारच प्रचलित आहे. परंतु वेदामध्यें या शब्दाचे याहून भिन्न असे अनेक अर्थ आलेले आहेत. हे अर्थ आतां पहा-

असुरहा सपत्नहा । ऋ० १० । १७० । २

" ( असुरहा ) राक्षसांना मारणारा ( सपत्नहा ) शत्रूंना मारणारा " इत्यादि प्रसंगी असुर शब्दाचा अर्थ राक्षस असा आहे. अशा ठिकाणी असुर शब्दाचा सगळ्यांत प्रथम जो अर्थ सांगितला, तो अर्थही घेण्यास कांहीं हरकत नाहीं.

" दूर फेंकणें " असाही " अस् " धातूचा एक अर्थ आहे. यावरून ( अस्यति इति असुरः ) जो वीर शत्रूंवर बाण फेंकतो तो असुर अर्थात् शूरवीर होय. हा अर्थही वेदामध्यें कित्येक ठिकाणीं आलेला आहे व याचा अर्थ शूरवीर असा होतो.

एकाच असुर शब्दाचे याप्रमाणें तीन अर्थ होतात व याहूनही अधिक अर्थ होणें शक्य आहे. या अर्थाचें नांव " यौगिक किंवा योगरूढ अर्थ " असें आहे. कारण या सर्व अर्थांमध्यें मुख्यत्वें करून धातूचा मूळ अर्थच दिसून येत असतो.

शब्दांच्या अर्थांचे तीन भेद आहेत. ( १ ) एक यौगिक अर्थ ( २ ) दुसरा योगरूढ अर्थ व ( ३ ) तिसरा केवळ रूढ अर्थ. यां पैकीं रूढ अर्थ लौकिक संस्कृत किंवा मराठी भाषेत सर्वांच्या परिचयाचेच आहेत. ( हस्ती, अश्वः, गौः ) हत्ती, घोडा, गाय आदि शब्द रूढीचे प्रयोग दाखवितात. या शब्दांचा उच्चार करतांच विवक्षित जनावरांची कल्पना आपल्या समोर उभी राहते. या शब्दांचा रूढार्थच असा आहे, हें प्रत्येकाला माहीत आहेच.

परंतु संस्कृत भाषेंत " अश्व " शब्द घोड्याचा वाचक असला तरी ही त्यावरून मूळ धातूच्या अर्थाचा ही एक विशेष प्रकारचा बोध होतो. जसें-( अश्नुते अध्वानम् ) अर्थात् ' जो मार्ग व्यापित जातो तो अश्व " असा अर्थ होतो. यालाच मराठींत घोडा असें म्हणतात. म्हणून " अश्व " शब्द रूढार्थानें प्रयुक्त होऊन सुद्धां त्यावरून यौगिक अर्थाची ही थोडीशी कल्पना येते. याचप्रमाणें

" पाचकः " ( शिजविणारा, आचारी ) आदि अनेक शब्द आहेत यांना " योगरूढीचे " शब्द ह्मणतात. हे शब्द रूढ असून शिवाय त्यांपासून यौगिक अर्थाचाही बोध होतो.

केवळ यौगिक शब्दांचा किती विलक्षण अर्थ होत असतो याची उदाहरणें यापूर्वी दिलेलीच आहेत. हे वेदांतील यौगिक व योगरूढीचे शब्द संस्कृत भाषेत पूर्ण रूढीचे शब्द झालेले आहेत. रूढीचे शब्द बनून सुद्धां त्यांचा मूळ यौगिक भाव त्यांतून बिलकुल नाहींसा झालेला नाहीं. ह्मणूनच संस्कृत भाषेंतील बहुतेक सर्वच शब्द यौगिक आहेत असें कित्येक व्याकरणाचार्य व बहुतेक सर्व निरुक्ताचार्य मानतात व वेदाचा अर्थ करते वेळीं याच पद्धतिचा हे अवलंब करतात.

वेदाचा अर्थ करणाऱ्यांनीं किंवा वेदाचें पठणपाठण करूं इच्छिणाऱ्यांनीं याप्रमाणें शब्दांचा मूळ अर्थ जाणण्याची शक्ति आपल्यामध्ये वाढविली पाहिजे. कारण या ज्ञानाच्या सहायानेंच वेदाचा खरा अर्थ समजण्याची शक्यता आहे. नाहीं तर वेदाचा गूढार्थ समजणें जवळ जवळ अशक्यच आहे.

---

## पाठ २

## रामायणम् ।

श्रीरामचंद्रस्यादेशानुसारेण सर्वेऽपि वानरयोधा दक्षिणां दिशं प्रतस्थिरे । महेन्द्रं अथ पर्वतं संप्राप्य रामः शिखरमारुरोह । सह्यं मलयं च समतिक्रम्यानुपूर्व्येण सर्वे समुद्रमासेदुः । धौतोपलां च वेलां स्पृष्ट्वा राम उवाच " इयमत्र भ्राता पूर्वोपस्थितैव चिन्ता । तदिह प्रस्तूयतां मन्त्रः । " इति ।

सुग्रीवस्तदा सेनां तीरे न्यवेशयत्। सागरसमीपस्थितं तत्सैन्यं द्वितीयः सागर इव विरराज। "सागरश्चाम्बरप्रख्यः अंबरं च सागरोपमम्। सागराम्बरयोर्मध्ये न कोऽपि विशेषो दृश्यते।" इति वानराः परस्परं वदन्तस्तत्र सर्वेऽपि तं सागरं प्रशशंसुः।

लंकायां रावणस्तु सुहृदामसन्मानात्सीताकाममोहितो भूत्वा च पापो राक्षसः कृशत्वं प्राप्तः। अतीते च काले सभां अकारयत्। तदा रावणस्य मंत्री महापार्श्वो महाबलः तं प्रोवाच- "हे रावण! शत्रून् मूर्ध्न्याक्रम्य सीतया रमस्व, कस्त्वां प्रतिषेद्धुं शक्नोति? अतोऽलं विचारेण।" इति।

रावणस्तु तमकथयत्-"पुरा प्रासाद्वेधसः शापाद्भीतोऽस्मि। स शाप एवमासीत्-यदि बलादन्यां नारीं गमिष्यसि मूर्धा ते शतधा भेत्स्यतीति--अतएव बलात्सीतां शयने नारोहये। रामस्तु मे बलं जानात्येव। अतः किं करोमीति चिंतये।"

तदा विभीषणः प्रत्युवाच- "धर्मानुवर्तिना तेन रामेण सह त्वया वैरं कर्तुं न योग्यम्। अतो दीयतामस्य सीता। बंधुत्वात् प्रसादये त्वाम्। कुरुष्व मम वचनम्। न्यायेन यो राजकार्याणि करोति स एव निश्चितार्थमतिः पश्चान्न सन्तप्यते।" इति।

रावणस्तु कालप्रेरितो विभीषणं हितं ब्रुवन्तमब्रवीत् "विभीषण! त्वं तु शत्रुसेवी स्वार्थप्रयुक्तः सन् एवं भाषसे, न त्वादृशेष्वनार्येषु सौहृदं संभवति। योऽन्य एवं ब्रूयात् अस्मिन्नेव मुहूर्ते स न भवेत् एव। हे कुलपांसन! त्वां तु धिक् एवास्तु। नात्र तिष्ठ, गच्छान्यत्र कुत्रचित्।" इति।

न्यायवादी विभीषणस्तु चतुर्भि राक्षसैः सह तदा गदापाणिर्भूत्वा उदतिष्ठदब्रवीच्च रावणं "हे रावण! न स्थितोऽसि धर्मपथे भ्रान्तोऽसि। अनेनाधर्ममार्गेण गच्छन्नाशमेव शीघ्रं गमिष्यसि। अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः। अतोऽहं गच्छामि

पराजितः। इन्द्रजित्तु पुत्रो रावणस्य बद्धगोधांगुलित्रोऽवध्यकवचश्च संग्रामेऽस्ति। महोदर-महापार्श्व-कम्पनाश्चास्यानीकपा लोकपालसमाः। विद्यन्ते चास्य रक्षसां दशकोटिसहस्राणि सैन्ये।" इति।

श्रुत्वैतद् विभीषणवचो रामेण दशग्रीवं हत्वा विभीषणाय राज्यदानं तत्रैव प्रतिज्ञातम्। समुद्राच्च जलमानीय लक्ष्मणहस्तेन रक्षसां राजेति तत्रैव चाऽसौ विभीषणोऽभिषिक्तः।

ततो रामो अप्रमत्तः नियमं पालयन् कुशास्तीर्णायां सागरवेलायां तिस्रो निशाः प्रतिशिश्ये।

तदा वानरसैन्यस्य प्रस्थानाय नलोऽपि वानरः तत्र सेतुं कर्तुं प्रचक्रमे। वानराः पादपान् बभञ्जुरतान् तत्रानयामासुश्च। सागरपूर्णार्थं तैः पर्वतप्रस्तरा अप्युत्पाट्यन्ते। प्रक्षिप्यमाणैस्तैर्वृक्षप्रस्तरादिभिः सहसा सागरजलमुध्वस्तम्। रामस्याज्ञापरैस्तैर्वानरैः प्रथमेऽह्नि चतुर्दशयोजनानि सेतुबंधनं कृतम्। पञ्चभिरस्त्वहोभिः सेतुः संपूर्णः सुशुभे। असौ सेतुर्दशयोजनविस्तीर्णः शतयोजनं ओयतश्चासीत्। कोटिसहस्राणि वानराणां सेतुं बध्वा सागरस्य पारं जग्मुः। वानरयूथपास्ततो लंकायां भेरीमृदंगशब्दं शुश्रुवुः। अमृष्यमाणाश्च तद्घोषं स्वयमपि घोरतरं विनेदुः। प्लवंगगर्जितं च तत्राक्षसैरपि श्रुतम्।

ततोऽरिंदमौ रामलक्ष्मणौ लंकामासेदुः। न्यविशन्त च लंकाम्। रामलक्ष्मणावुत्तरं द्वारं रुरुधतुः। नीलमैन्दद्विविदाः पूर्वं द्वारं, अंगदश्च दक्षिणं, पश्चिममपि हनूमान् रुरुधे। मध्यमे गुल्मे सुग्रीवः समतिष्ठत सह सुपर्णपवनादिभिर्वानरैः। सहज्ञास्त्रवांस्तु सुषेणो रामस्य पश्चिमेन तस्थौ। एवं द्रुमपाणिभिर्वानरैर्लंका वायुनाऽपि दुष्प्रवेशा सर्वतः संवृता। ततो रामोऽगदं दशग्रीवं प्रति प्रेषयामास। संदिदेश च "येन बलेनाधममायया सीतां हृतवानसि

